श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः ३५ रत्नम्

अनुभूतिस्वरूपाचार्यविरचितम्—

# सारस्वतं व्याकरणम्

## ( पूर्वार्द्धम् )

श्रीगुरुप्रसादशास्त्रिसङ्कलितया प्रसाद-चन्द्रकीर्त्या-
दिसारभूतया अत्युत्तमया सरलाख्यटीकया विराजितम् ।

[ अत्युत्तमं सटीकं संस्करणम् ]

प्रकाशकः

भार्गवपुस्तकालयः,

गायघाट, काशी ।

द्वितीयं संस्करणम्
२०००

१९४२

मूल्य ॥=)



सरलाटीकाऽलङ्कृतं

# सारस्वतव्याकरणम् ।

## अथ संज्ञाप्रकरणम् ।

**प्रणम्य परमात्मानं बालधीवृद्धिसिद्धये ।**
**सारस्वतीमृजुं कुर्वे प्रक्रियां नातिविस्तराम् ॥ १ ॥**

---

## श्रीगुरुप्रसादशास्त्रिसङ्कलिता सरला

चन्द्रकीर्त्त्यादिटीकाभ्यः सारमाकृष्य सारवित् ।
गुरुप्रसादस्तनुते सरलां प्रक्रियानुगाम् ॥ १ ॥

**प्रणम्येति** । अहमनुभूतिस्वरूपाचार्यः सारस्वतीं सरस्वतीप्रणीतसूत्र-सम्बन्धिनीम्-प्रक्रियामृजुं सरलां कुर्वे विदधे । लोकप्रसिद्धशब्दव्युत्पादनार्थ-मीषद्रचयामीत्यर्थः । किं कृत्वा ? । परमात्मानं=परमेश्वरम् । प्रणम्य=प्रकर्षेण मनोवाक्कायैर्नत्वा—इत्यर्थः ।

ननु 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायो जागर्त्ति, अतोऽत्र प्रक्रियाया ऋजुकरणे किं प्रयोजनमित्यत आह—**बालधीवृद्धिसिद्धये इति** । सत्स्वपि महाभाष्यादिषु तेषां गहनत्वेन बालानां सम्यगप्रबोधात्, स्वल्पबुद्धीन् जनांस्तेषु ग्रन्थेषु चानादरान् सम्भाव्येमां प्रक्रियामवैयाकरण-बालबुद्धिवर्धननिष्पत्त्यर्थं कुर्वे इत्यर्थः । चिकीर्षितायामपि प्रक्रियायां वक्रत्व-करणेऽस्यां भूयांसो जना निरादरा स्युरतस्तन्निरासार्थमाह—**ऋजुमिति** ।

**इन्द्रादयोऽपि यस्याऽन्तं न ययुः शब्दवारिधेः ।**
**प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम् ? ॥ २ ॥**

तत्र तावत्सञ्ज्ञा संव्यवहाराय सङ्गृह्यते ।

---

सरलामित्यर्थः । सरस्वतीदत्तसूत्राणां क्रममुत्सृज्य प्रयोगसाधनार्थं यत्र तत्र स्थितानां सूत्राणामनुक्रममेलनेन ऋजुं सरलां कुर्वे इत्यर्थः । पुनः कथम्भूतां-**नातिविस्तराम्** । विस्तरः-शब्दबाहुल्यं, तेन रहितां, स्वल्पग्रन्थां प्रचुरार्थामित्यर्थः ।एतावता सर्वाण्यपि सूत्राण्यादायोदोहरणसाधनार्थं बालव्युत्पत्त्यर्थं च दीपिकाकल्पामिमां प्रक्रियां कुर्वे इति भावः । अत्र बालधीवृद्धिः प्रयोजनम् । शब्दा विषयाः । बालाश्चाधिकारिणः । प्रतिपाद्यप्रतिपादकभावश्च सम्बन्ध इत्यवधेयम् ॥ १ ॥

'ननु विस्तरः कथं निरस्तः' इत्याशङ्कानिवारकं, किञ्च स्वगर्वापहार सूचकं द्वितीयश्लोकमाह—**इन्द्रादयोऽपीति** ।

इन्द्रादयो देवाः । अपिशब्दाद्व्यासवाल्मीक्यादय ऋषयोऽपि । यद्वा-इन्द्रादयोऽष्टौ प्राचीना व्याकरणकर्तारोऽपि । यस्य शब्दवारिधेः=शब्दसमुद्रस्य व्याकरणस्य—अन्तं=पारं, न ययुः= न प्रापुः, तस्य कृत्स्नस्य=समग्रस्य शब्दवारिधेः, प्रक्रियां=शब्दव्युत्पादनविद्यां वक्तुं नरः मल्लक्षणो मनुष्यः कथं क्षमः=कथं समर्थो भवति ? । न भवतीत्यर्थः । अतः कारणात् संक्षेपतः कथयामीत्यर्थः । इन्द्र आदिर्येषां ते इन्द्रादयः ।

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ हि शाब्दिकाः ॥ इति ॥'

**तत्रेति** । तत्र=तस्यां सारस्वतीप्रक्रियायां, तावत्=आदौ प्रथममेव । समानस्वरादीनां संज्ञा=नाम मया संगृह्यते । कस्मै प्रयोजनाय ? । संव्यवहाराय-सम्यक्शास्त्रव्यवहाराय । शास्त्रं हि संज्ञां विना न सम्यगवबुध्यते । यथा किल लोकेऽपि श्रूयते-'अयं राजा' 'अयममात्यः' 'अयं यज्ञदत्तः' अयं देवदत्तः' इत्यादि, तथाऽत्रापि समानादिसंज्ञा शास्त्रव्यवहाराय संगृह्यते इति भावः ।

**अ इ उ ऋ ऌ समानाः । १ ।**

**अनेन प्रत्याहारग्रहणाय वर्णाः परिगण्यन्ते, तेषां समानसंज्ञा च विधीयते । नैतेषु सूत्रेषु सन्धिरनुसन्धेयोऽविवक्षितत्वात् । 'विवक्षितस्तु सन्धिर्भवती'ति नियमात् । लौकिकप्रयोगनिष्पत्तये समयमात्रसत्त्वाच्च ॥ १ ॥**

---

'अ इ उ' इत्येतत्सूत्रं कार्यद्वयविधायकं, वर्णपरिगणननिरूपकं समानसंज्ञानिरूपकं चेत्यर्थः । तदेवाह—**अनेनेति** । अनेन—उक्तवक्ष्यमाणसूत्रसमुच्चयेन प्रत्याहारग्रहणाय वर्णा अक्षराणि परि सामस्त्येन गण्यन्ते संख्यायन्ते—परिपाट्या प्रकाश्यन्ते, च—पुनस्तेषा पूर्वोक्तानाम् अइउऋऌअक्षराणां समानसंज्ञा—समान इति नाम विधीयते क्रियते इत्यर्थः ।

ननु 'अइउऋऌ' इत्यादिषु सूत्रेषु सन्धिः कथं न कृतस्तत्राह—**नैतेष्विति** । एतेषु=उक्तवक्ष्यमाणेषु सूत्रेषु । सन्धिर्नानुसन्धेयः=न कर्तव्यः । कस्मात् ? । 'अविवक्षितत्वात्' । वक्तुमिष्टो—विवक्षितः । यद्वा वक्तुमिच्छा विवक्षा, विवक्षा जाता अस्येति विवक्षितः, न विवक्षितोऽविवक्षितः, तस्य भावोऽविवक्षितत्वं, तस्मात्—अविवक्षितत्वात्=वक्तुमवाञ्छितत्वात् ।

हेत्वन्तरमाह—**विवक्षितस्त्विति** । तु=पुनर्विवक्षित एव सन्धिर्भवति नाविवक्षित इति, नियमात्=गुर्वाम्नायनिश्चयात् । यत्र सन्धौ कृते कार्यभ्रंशो भवति सोऽविवक्षितः सन्धिः । यथा—'अ इ उ ऋ ऌ' इत्यस्य 'य्व्ॡ' इति । यत्र न सन्धौ कृते कार्यसिद्धिर्भवति स विवक्षितः सन्धिः । यथा—ई च ऊ च ए च 'य्वे' इत्यादिषु न निषेधः ।

तत्र हेतुमाह—**लौकिकेति** । लोक्यन्ते विलोक्यन्ते शब्दापशब्दा अनेनेति लोको व्याकरणं, लोके भवा लौकिका अनादिसिद्धास्ते च ते प्रयोगाश्च लौकिकप्रयोगास्तेषां निष्पत्तिः सिद्धिः—लौकिकप्रयोगनिष्पत्तिस्तस्यै—लौकिकप्रयोगनिष्पत्तये । समयमात्रत्वात्=सूचनामात्रकृत्वात् । विभक्त्यादिसङ्केतरूपत्वाच्छास्त्रस्येति,—सन्धिर्न कृतः । अस्य व्याकरणस्य सङ्केत-

## ह्रस्वदीर्घप्लुतभेदाः सवर्णाः । २ ।

एतेषां ह्रस्वदीर्घप्लुतभेदाः परस्परं सवर्णा भण्यन्ते । 'लोकाच्छेषस्य सिद्धि'रिति वक्ष्यति, ततो लोकत एव ह्रस्वादिसंज्ञा ज्ञातव्याः । एकमात्रो **ह्रस्वः**, द्विमात्रो **दीर्घः**, त्रिमात्रः **प्लुतः** । **व्यञ्जनश्चार्धमात्रकम्** । एषामन्येऽप्युदात्तादिभेदाः सन्ति । उच्चै-

---

रूपत्वाद्विभक्त्यनुपलम्भेऽपि अर्थानुसारेण साङ्केतिकं पदं व्यवहर्तव्यम् ।। चशब्दो हेत्वन्तरसूचकः । अत्र केऽप्याहुः—लोके भवा लौकिका बालास्तेषां प्रयोगनिष्पत्तिस्तस्यै सूचनमेवोक्तमत्रास्तीति भावः । अस्य व्याकरणस्य सङ्केतरूपत्वाद्विभक्त्यनुपलम्भेऽप्यर्थानुसारेण साङ्केतिकं पदं व्यवहर्त्तव्यम् । कृते हि सन्धिकार्ये 'अय्ल्‌ॣ' इति पदं भवति, तथापाठे च मन्दबुद्धयो जनाः सायासाः संजायन्ते, यकारादीनां च स्वरसंज्ञाप्रसक्तिर्भवति, अतोऽत्र सन्धिर्न कृतः ।।

**ह्रस्वेति** । एतेषां=समानानां ह्रस्वदीर्घप्लुतभेदाः परस्परमन्योन्यं स्वजातीयेन सवर्णा भण्यन्ते=कथ्यन्ते । **लोकादित्यादि** । शेषस्य सरस्वतीव्याकरणेऽनुक्तस्य सिद्धिर्निष्पत्तिर्लौकात्=अन्यव्याकरणात् ज्ञेया । लोकात्—गुरुपारम्पर्याद्वा । 'अवगन्तव्ये'ति शेषः । अस्य ग्रन्थस्यान्ते 'लोकात्—' इति पदं वक्ष्यति=कथयिष्यति । ततस्तस्मात्कारणाल्लोकतोऽन्यव्याकरणादेव ह्रस्वादिसञ्ज्ञा ज्ञातव्याः ।

लोकोक्तमेव ह्रस्वादीनां लक्षणमाह—**एकेति** । एका मात्रा उच्चारणकाले यस्य स एकमात्रो ह्रस्व उच्यते । अक्षिस्पन्दन-

---

१ 'एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्द्धमात्रकम् ॥ १ ॥
चाषस्तु वदते मात्रां द्विमात्रन्त्वेव वायसः ।
शिखी रौति त्रिमात्रन्तु नकुलस्त्वर्द्धमात्रकम् ॥ २ ॥

रुपलभ्यमान **उदात्तः**। नीचैरनुदात्तः। समवृत्त्या **स्वरितः**। सानुनासिको निरनुनासिकश्च ॥ २ ॥

**ए ऐ ओ औ सन्ध्यक्षराणि । ३ ।**

एषां ह्रस्वा न सन्ति ॥ ३ ॥

**उभये स्वराः । ४ ।**

---

प्रमाणः कालो मात्रा। द्वे मात्रे उच्चारणकालो यस्य स द्विमात्रो दीर्घः। तिस्रो मात्रा उच्चारणकालो यस्य स त्रिमात्रः प्लुतः। अर्धमात्रायां भवमार्धमात्रिकं व्यञ्जनमुच्यते।

एवं मुखनासिकाभ्यां कृत्वोच्चार्यमाणो वर्णः **सानुनासिकः**। तद्विपरीतो **निरनुनासिकः**। निर्गता नासिका उच्चार्यमाणकाले यस्मात्स निरनुनासिकः। किन्तु केवलं मुखेनोच्चार्यमाणो वर्ण इत्यर्थः।

**उभये इति**। उभौ प्रकारावयवौ येषां ते उभये। अकारादयः पञ्च-अ इ उ ऋ ऌ। चत्वार एकारादयश्च ए ऐ ओ औ। एते उभये मिलिताः नवसङ्ख्याः स्वरा उच्यन्ते कथ्यन्ते। चकारात्समानानां ह्रस्वदीर्घभेदमेलनेन चतुर्दश स्वरा भवन्ति। यथा—अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ इति।

**अचामष्टादश भेदास्तद्बोधकं कोष्ठकम्—**

| अ इ उ ऋ ऌ | अ इ उ ऋ ए ओ ऐ औ | अ इ उ ऋ ऌ ए ऐ ओ औ |
|---|---|---|
| ह्रस्वभेदाः। | दीर्घभेदाः। | प्लुतभेदाः। |
| ह्रस्व— | दीर्घ— | प्लुत— |
| १ उदात्तानुनासिकः | ७ उदात्तानुनासिकः | १३ उदात्तानुनासिकः |
| २ उदात्ताननुनासिकः | ८ उदात्ताननुनासिकः | १४ उदात्ताननुनासिकः |
| ३ अनुदात्तानुनासिकः | ९ अनुदात्तानुनासिकः | १५ अनुदात्तानुनासिकः |
| ४ अनुदात्ताननुनासिकः | १० अनुदात्ताननुनासिकः | १६ अनुदात्ताननुनासिकः |
| ५ स्वरितानुनासिकः | ११ स्वरितानुनासिकः | १७ स्वरितानुनासिकः |
| ६ स्वरिताननुनासिकः | १२ स्वरिताननुनासिकः | १८ स्वरिताननुनासिकः |

अकारादयः पञ्च, एकारादयश्चत्वार इत्युभये स्वरा उच्यन्ते ॥४॥

## 'अ' वर्जा नामिनः । ५ ।

अवर्णवर्ज्जाः स्वरा नामिन उच्यन्ते । अनुक्रान्तास्तावत्स्वराः॥ प्रत्याहारजिग्राहयिषया व्यञ्जनान्यनुक्रामति,—हयवरल, ञणनङम, झढधघभ, जडदगब, छठथखफ, चटतकप, शषसेति ॥ ५ ॥

## आद्यन्ताभ्याम् । ६ ।

प्रत्याहारं जिघृक्षता आद्यन्ताभ्यामेते वर्णा ग्राह्याः । आदिवर्णोऽन्त्येन सह गृह्यमाणस्तन्नामा प्रत्याहारः । तथाहि—अकारो

---

**अवर्जा इति** । अम्=अवर्णं वर्जयन्तीत्यवर्जाः=अवर्णवर्जाः । अवर्णवर्जाः=अकाराकाररहिताः । स्वराः—इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ एते द्वादश 'नामिन' उच्यन्ते इत्यर्थः ।

**अनुक्रान्ता इति** । तावदादौ स्वरा अनुक्रान्ताः=अनुक्रमेण कथिताः।

**व्यञ्जनानीति** । व्यज्यन्ते प्रकटीक्रियन्तेऽर्थाः प्रत्याहारा वा एभिरिति व्यञ्जनानि-अनुक्रामति । इदानीं कथयति । कया? । ग्राहयितुमिच्छा जिग्राहयिषा । प्रति-कार्यं कार्यमाह्रियन्ते आनीयन्ते इति प्रत्याहाराः—अन्नादयस्तेषां प्रत्याहाराणां जिग्राहयिषा प्रत्याहारजिग्राहयिषा, तया—प्रत्याहारजिग्राहयिषया । व्यञ्जनान्यनुक्रामति=अनुक्रमेण कथयति ।

**प्रत्याहारमिति** । प्रत्याह्रियन्ते—सङ्क्षिप्यन्ते वर्णा यत्रेति प्रत्याहारः, तं प्रत्याहारं जिघृक्षता—ग्रहीतुमिच्छता छात्रेण पुरुषेण वा आद्यन्ताभ्यां कृत्वा आद्यन्तवर्णाभ्यां सह एते हकारादयः सकारपर्यन्ताः वर्णास्त्रयस्त्रिंशद्वसा ग्राह्याः । प्रत्याहारं व्यञ्जयन्नाह—**आदिवर्ण इति**। आदौ वर्णः—आदिवर्णः, सोऽन्तस्थेन वर्णेन अक्षरेण सह गृह्यमाणः उच्चार्यमाणो वा अबप्रत्याहारादिस्तन्नामा प्रत्याहार उच्यते । तदेव—आद्यन्तवर्णात्मकमेव नाम यस्य स तन्नामा ।

बकारेण सह गृह्यमाणोऽबप्रत्याहारः । स च अइउऋऌ, एऐ ओऔ, हयवरल, ञणनङम, झढधघभ, जडदगब,—इत्येतावत्सङ्ख्याकः सम्पद्यते । चटतकप इति चपप्रत्याहारः । झढधघभ इति झभप्रत्याहारः । जढदगब इति जबप्रत्याहारः । ञणनङम इति ञमप्रत्याहारः । एवं यत्र यत्र येन येन प्रत्याहारेण कृत्यं स तत्र तत्र ग्राह्यः । सङ्ख्या(ऽ)नियमस्तु नास्ति ॥ ६ ॥

---

स च=अबप्रत्याहारश्च । इति=एतावत्संख्याक इत्यमुना प्रकारेण । एतावता एकोनत्रिंशद्वर्णप्रमाणा संख्या यावत्संपद्यते भवति । आकारादिसवर्णग्रहणात्तु चतुस्त्रिंशद्वर्णप्रमाणसंख्या भवति । चटतकप इति पञ्चभिरक्षरैः चपप्रत्याहारो भवति । आद्यन्तयोश्चकारपकारग्रहणेन चपः । एवं झढधघभ इत्याद्यन्तयोर्झकारभकारयोर्ग्रहणेन झभः । जडदगब इत्यत्र जकारबकारयोर्ग्रहणेन जबः ।

**एवमिति ।** एवम्=अमुना प्रकारेण । यत्र यत्रोदाहरणे येन प्रत्याहारेण सह कृत्यं कार्यं भवति स स प्रत्याहारस्तत्र तत्रोदाहरणे ग्राह्यः । प्रत्याहाराणां सङ्ख्यानियस्तु नास्ति, यत् इयन्त एव प्रत्याहाराः सन्तीति । परेतु—'सङ्ख्याऽनियमस्तु नास्ती'ति च्छित्वाऽत्र सङ्ख्यानियममेवेच्छन्ति । तथाहि तेषां प्रत्याहारसङ्ग्रहश्लोकाः—

'हसो झबो जबश्चैव यपो अब इलश्चपः ।
ञमो झभः खसः प्रोक्ता झसश्च छत ईरितः ॥
यमो हबः खपश्चोक्तो डबश्च ढम इष्यते ।
रसो वसः शसः ख्यातो झपो अब उदाहृतः ॥
ओ उच्यते ततः प्राज्ञैः प्रत्याहारा उदाहृताः ।
सौत्रा एते स्फुटं ज्ञेयास्तथा चान्ये यथामति ॥

---

१ 'सङ्ख्याऽनियमस्तु नास्ती'ति तु चन्द्रकीर्त्तिकृत्संमतः पाठः ।

## हसा व्यञ्जनानि । ७ ।

हकारादयः सकारान्ता वर्णा हसा व्यञ्जनानि भवन्ति । स्वर-हीनं व्यञ्जनम् । तेष्वकारः सुखोच्चारणार्थत्वादित्संज्ञको भवति ॥ ७ ॥

## कार्यायेत् । ८ ।

प्रत्ययाद्यतिरिक्तः कस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्संज्ञको भवति । यस्येत्संज्ञा तस्य लोपः । प्रत्ययादर्शनं लुक् । वर्णादर्शनं

---

तथा च प्रत्याहारसङ्ख्याबोधकं कोष्ठकम्—

| | | | | | |
|---|---|---|---|---|---|
| १ हस | २ झव | ३ जब | ४ यप | ५ भब | ६ हल |
| ७ चप | ८ ञम | ९ झभ | १० खस | ११ झस | १२ छत |
| १३ यम | १४ हब | १५ खप | १६ ढब | १७ ढभ | १८ रम |
| १९ वस | २० शम | २१ छप | २२ अब | २३ ओ | १४ मव |

व्यञ्जनलक्षणमाह—**स्वरहीनमिति** । तद्व्यञ्जनं नाम यत्स्वरेभ्यो हीनं रहितम् । यद्वा स्वरेभ्यो हीनं व्यतिरिक्तम् । यद्वा स्वरविहीनमपारं यदक्षरं तद्व्यञ्जनसंज्ञं कथ्यते । सुखेनोच्चारणमेव अर्थः प्रयोजनं यस्य स सुखोच्चारणार्थस्तस्य भावः सुखोच्चारणार्थत्वं, तस्मात् इत्संज्ञकः ।

**प्रत्ययादीति** । आदिशब्दात् प्रत्ययागमादेशोपदेशेभ्योऽतिरिक्तोऽधिकः । प्रत्ययादतिरिक्तः—अप्प्रत्ययादिः । आगमातिरिक्तः-नुडागमादिः । उपदेशः शिष्याख्यारूपः—हयवरलेत्यादिः । आदेशः 'पुंसोऽसुङ्' इत्यादिरूपः । एषु कस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्संज्ञकोऽनुबन्धसंज्ञको भवतीति ॥ कृत्यमाह—यस्येत्संज्ञा तस्य लोपः क्रियते । उच्चरितप्रध्वंसिनो ह्यनुबन्धा इति ॥

लोपलक्षणमाह—**वर्णादेति** । वर्णानामक्षराणामदर्शनमविलोकनं प्रध्वंसाभावो लोप उच्यते ॥ वर्णानां विरोधः सन्धिकार्यवर्जनं यस्मिन् स लोप

लोपः। वर्णविरोधो **लोपश्**। मित्रव**दागमः**। शत्रु**वदादेशः**। स्वरानन्तरिता हसाः **संयोगः**। कु चु टु तु पु **वर्गाः**। उकारः पञ्चवर्णपरिग्रहणार्थः ॥ ८ ॥

**अरेदोन्नामिनो गुणः। ९।**

नामिनः स्थानिका अर् ए ओ एते गुणसंज्ञका भवन्ति ॥९॥

**आरै औ वृद्धिः। १०।**

आ आर् ऐ औ एते वृद्धिसंज्ञका भवन्ति ॥ १० ॥

**अन्त्यस्वरादिष्टिः। ११।**

अन्त्यो यः स्वरस्तदादिवर्णः स टिसंज्ञको भवति ॥ ११ ॥

**अन्त्यात्पूर्व उपधा। १२।**

अन्त्याद्वर्णमात्रात्पूर्वो यो वर्णः स उपधासंज्ञको भवति। अस-

---

एव लोपश् कथ्यते। एकं वर्णं विनाशयत्यन्यस्योत्पत्तिं प्रतिबध्नातीति लोपश्। तत्कार्यं—'लोपशि पुनर्न सन्धिः' इति। यथा-त आगता इत्यादि ॥

आगमो मित्रवत्। मित्रं मित्रस्य समीपे आगत्योपविशति तथागमोऽप्यायाति। यथा 'नः सक् छते' इति सगादिः ॥ आदेशः शत्रुवत्। यथा शत्रुः शत्रुं विनाश्य तत्स्थाने तिष्ठति तथा आदेशोऽप्यादेशिनं विनाश्य तस्य स्थाने भवति। शसः सकारस्य नकारादेशवत्।

नामिस्थानिकाः--नामिनां स्थाने जाताः-ऋकारस्य ॠकारस्य च अर्, इकारस्य ईकारस्य च ए, उकारस्य ऊकारस्य ओ, एते च त्रयो-गुणसंज्ञका भवन्ति। लृकारस्तु सावर्ण्यात् ग्राह्यः। तेन लृकारस्य अल् गुणः।

अकारस्य आ वृद्धिः। ऋकारस्य आर् वृद्धिः। इवर्णस्य एकारस्य ऐ वृद्धिः, उवर्णस्य ओकारस्य च औ वृद्धिः। एते चत्वारः वृद्धिसंज्ञका उच्यन्ते। ऋकारलृकारयोः सावर्ण्यादेव लृकारस्याऽऽल् वृद्धिः।

योगादिपरो ह्रस्वो **लघुः**, विसर्गानुस्वारसंयोगादिपरो दीर्घश्च **गुरुः** ॥ १२ ॥

**मुखनासिकावचनोऽनुनासिकः । १३ ।**

मुखनासिकाभ्यामुच्चार्यमाणो वर्णोऽनुनासिकः । द्विबिन्दु-**र्विसर्गः** । शिरोबिन्दुर**नुस्वारः** । अकुहविसर्जनीयानां **कण्ठः** । इचुयशानां **तालु** । ऋटुरषाणां **मूर्धा** । लृतुलसानां **दन्ताः** । उपूपध्मानीयाना**मोष्ठौ** । ञमङणनानां **नासिका** च । एदैतोः **कण्ठतालु** । ओदौतोः **कण्ठोष्ठम्** । वकारस्य **दन्तोष्ठम्** । ≍ क इति **जिह्वामूलीयः** । ≍ प इत्युप**ध्मानीयः** । अं इत्य**नुस्वारः** । अः इति **विसर्गः** । वर्णग्रहणे सवर्णग्रहणम् । 'कार'ग्रहणे केवल-ग्रहणम् । तपरकरणं तावन्मात्रार्थम् । अनुक्ता अपि ज्ञेयाः ॥ १३ ॥

**इति सारस्वते संज्ञाप्रक्रिया ।**

---

संयोगविसर्गानुस्वाराः परे अग्रे यस्मात्स संयोगादिपरः, न संयो-गादिपरः असंयोगादिपरः एवंभूतो ह्रस्वो वर्णो लघुरुच्यते ।

**विसर्गानुस्वारेति** । विसर्गानुस्वारसंयोगाः परे अग्रे वर्तमाना यस्मात्स विसर्गानुस्वारसंयोगपरः । विसर्गपरो यथा—अः । अनुस्वारपरः—अं । संयोगपरो यथा—अस्य । एवंभूतो ह्रस्वोऽपि गुरुः पुनर्दीर्घश्च ।

तदेवं चतुर्दश स्वराः, त्रयस्त्रिंशद्व्यञ्जनानि, अनुस्वारः, विसर्गः, जिह्वामूलीयः, उपध्मानीयः, प्लुतश्च । एवं द्विपञ्चाशदक्षराणि । एतेषामष्टौ स्थानानि सन्ति । तान्याह—**अकुहेति** ।

'वर्णग्रहणे सवर्णग्रहणं', कारग्रहणे केवलग्रहणं', 'तपरग्रहणे तावन्मात्रग्रहण'मिति शिष्टसङ्केतः ।

# अथुना स्वरसन्धिर्विधीयते ।

## इ यं स्वरे । १ ।

इवर्णो यत्वमापद्यते स्वरे परे । दधि आनय इति स्थिते दध् य् आनय इति तावद्भवति ॥ १ ॥

## हसेऽर्हसः[1] । २ ।

स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्भवति । इति

अक्षराणामन्योन्यं सन्धानं—मेलनं—सन्धिः । तत्राप्यादौ स्वरसन्धिः। स्वराणां सन्धिः स्वरसन्धिः ।

ननु सति अकारे इकारसन्धिरादावेव कथं प्रतिपादितः । तत्रोच्यते—ईकारः सावित्रीरूपः शक्तिरूपः । सा च सर्वजगत्सृष्टिकर्त्री । तस्मात्पूर्वं स प्रतिपादितः। 'वर्णग्रहणे सवर्णग्रहणम्' इति वचनात् इवर्णं इकाररूप ईकाररूपश्च यत्वं यकारमापद्यते—प्राप्नोति स्वरे परे । 'ह्रस्वदीर्घप्लुतभेदा' इति अकारस्य स्वरत्वं आकारस्यापि स्वरत्वं सिद्धमेव । दधि अग्रे आनाय । 'इ यं स्वरे' अनेन सूत्रेण इकारस्य यकारः । दध्य् आनय इति जातम् । ननु दधि आनयेत्यत्र 'नामिनः स्वरे' इति नुमागमः कथं न क्रियते ? । तत्राह—'नामिनः स्वरे' इति तु स्यादिविभक्तिसप्तकस्वरे परे भवति न त्वन्यत्र । तर्हि 'यस्य लोपः' कथं न क्रियते ? । तत्राह—'यस्य लोपः' इति तु ईपि तद्धिते कृते स्वरे यकारे च परे सति भवति न त्वन्यत्र । दध्य् आनयेत्यत्र 'संयोगान्तस्य लोपः' इत्यस्य प्राप्तौ 'असिद्धं बहिरङ्गम्' इति यलोपनिषेधः। यद्वा—'संयोगान्तस्य लोपः' इत्यस्य प्राप्तौ 'असिद्धं बहिरङ्गम्' इति यलोपनिषेधः । यद्वा—'संयोगान्तस्य लोपः' इति स्वाभाविकसंयोगान्तविषयः । प्रक्रियायां तु 'संयोगान्तस्ये'ति लोपे प्राप्ते 'यणः प्रतिषेधो वाच्यः' ।

**स्वरादिति** । स्वरात् ह्रस्वस्वरात्परोऽग्रे वर्तमानो रेफहकारवर्जितोऽन्यो

१ 'अर्ह्' इति पाठान्तरम् ।

धकारस्य द्वित्वम् । पुनर्द्वित्वे प्राप्ते न द्विरुक्तस्य द्विरुक्तिः । द्वित्वविधानसामर्थ्याद्द्वावेव शिष्येते, अन्ये हसा लुप्यन्ते ॥

**झभे जबाः । ३ ।**

झसानां झभे परे जबा भवन्ति । इति पूर्वधकारस्य दकारः, सवर्णत्वात् । 'वर्ग्यो वर्ग्येण सवर्णः' इति वचनात् । यथासंख्यं वा वक्तव्यम् । ***स्वरहीनं परेण संयोज्यम्*** । दद्ध्यानय इति ।

---

हसो हसप्रत्याहारसम्बन्धी वर्णो हसे परे सति द्विर्भवति । द्वयोर्भावो द्वित्वम् । एकस्य द्वौ भवत इत्यर्थः ।

**द्वित्वमिति** । द्वित्वे कृते पुनर्द्वित्वं न भवति, अनवस्थादोषप्रसङ्गात् । द्वित्वविधानात् द्वावेव शिष्येते इति दध्ध्य् आनयेति जातम् ।

ननु झसास्त्रयोविंशतिः जबाः पञ्चैव तेन न यथासंख्यमिति धकारस्य दकार एव कथं क्रियते ? । तत्राह—**सवर्णत्वादिति** । सवर्णत्वात् धकारस्य दकारो भवति । ननु धकारदकारयोः सावर्ण्यं कथमित्याह—**वर्ग्यो वर्ग्येण सवर्ण इति** । वर्गे भवो वर्ग्यो वर्णः वर्ग्येण—स्ववर्गान्तर्वर्तिना अक्षरेण सह सवर्णो भवतीति सवर्णत्वात् धस्य दः । **यथासङ्ख्यमिति** । यथासङ्ख्यं झढध जडदेत्यनेनापि धस्य दः । अत्र तु सवर्णत्वात् यथासङ्ख्यमित्युभयथापि धस्य दकारो भवति । परमग्निमद्भ्यामित्यत्र सवर्णत्वादेव थकारस्य दकारो भवति न तु यथासङ्ख्यम् । **स्वरहीनमिति** । स्वरेण हीनं रहितं

---

१ 'तक्रं न रोचतेऽस्माकं दुग्धं च मधुरायते ।
अन्नप्ररोचनार्थाय दध्यानय वरानने ! ॥
दधि न श्रूयते कर्णे घृतं स्वप्ने न दृश्यते ।
मुग्धे ! दुग्धस्य का वार्ता तक्रं शक्रस्य दुर्लभम् ॥
कृतस्य करणं नास्ति मृतस्य मरणं न हि ।
पिष्टस्य पेषणं नास्ति द्वितीये त्रितयं न हि ॥

सिद्धम्। गौरी अत्र। अर्हेति विशेषणान्न रेफस्य द्वित्वम्, किन्तु॥३॥

**राद्यपो द्विः । ४ ।**

स्वरपूर्वाद्रेफात्परो यपो द्विर्भवति । जलतुंम्बिकान्यायेन रेफस्योर्ध्वगमनम् । गौर्य्यत्र । स्वर इत्यनुवर्तते । एवमन्यत्रापि यत्र न सूत्राक्षरैः कार्यसिद्धिस्तत्र सर्वत्र सूत्रान्तरात्पदानुवृत्तिर्ज्ञातव्या । ग्रन्थभूयस्त्वभयान्नास्माभिर्लिख्यते ॥ ४ ॥

---

यदक्षरं तत्परेण अग्रस्थितेन स्वरेण वर्णेन सह संयोज्यम्। तेन दध्यानयेति सिद्धम् ।

**स्वरेति** । स्वरः पूर्वं आदौ यस्य स स्वरपूर्वः, तस्मात् स्वरात्परस्माद्रेफात्परोऽग्रस्थो यपो द्विर्भवति इत्यर्थः । यकारस्य द्वित्वम् ॥

**जलतुम्बिकेति** । यथा तुम्बी जलस्योपरि तिष्ठति तथा रेफोऽपि वर्णस्योपरि गच्छति नत्वधः ।

**स्वर इति** । इतोऽग्रे स्वरसन्धि यावत् सर्वेष्वपि सूत्रेषु 'स्वरे' इति पदमनुवर्तते—अन्वागच्छति । अनुक्तमपि ज्ञेयमित्यर्थः । यथा 'इ यं स्वरे' इत्यत्र 'स्वरे' इति पदम्। तथा तत्र 'उ वम्' इत्यादिष्वपि ज्ञेयम्। एवममुना प्रकारेण, अन्यत्र योगेष्वपि यत्र केवलसूत्राक्षरैः कार्यसिद्धिर्न भवति

---

१ जलतुम्बिकान्यायांस्त्वत्थमुच्यते—

'तुम्बिका तृणकाष्ठं च तैलं जलसमागमे ।
ऊर्ध्वस्थानं समायान्ति रेफाणामीदृशी गतिः ॥
रेफः स्वरपरं वर्णं दृष्ट्वाऽऽरोहति तच्छिरः ।
पुरः स्थितं यदा पश्येदधः संक्रमते स्वरम्' ॥

उ वम् । ५ ।

उवर्णो वत्वमापद्यते स्वरे परे । मधु अत्र-मध्वत्र ॥ ५ ॥

ऋ रम् । ६ ।

ऋवर्णो रत्वमापद्यते स्वरे परे । पितृ अर्थः—पित्रर्थः ॥ ६ ॥

ऌ लम् । ७ ।

ऌवर्णो लत्वमापद्यते स्वरे परे । ऌ अनुबन्धः—लनुबन्धः ॥७॥

ए अय् । ८ ।

एकारो अय् भवति स्वरे परे । ने अनं-नयनम् ॥ ८ ॥

ओ अव् । ९ ।

ओकारो अव् भवति स्वरे परे । लो अनं लवनम् । भो अति, भवति । ***गवादेरवर्णागमोऽत्रादौ वक्तव्यः*** । गो अक्षः गवाक्षः । गो इन्द्रः गवेन्द्रः । गो अजिनं-गवाजिनम् । प्र ऊढः प्रौढः । स्व ईरिणी स्वैरिणी । अक्ष ऊहिनी—अक्षौहिणी[१] सेना ।

---

तत्र योगे सूत्रान्तरादन्यसूत्रात्पदान्तस्य—अन्यपदस्यानुवृत्तिर्ज्ञेया । ग्रन्थस्य शास्त्रस्य भूयस्त्वभयात्—प्राचुर्यभयात् सूत्रे तत्तत्पदमस्माभिर्न लिख्यते इत्यर्थः

**उवर्ण इति** । तपरकरणं विना कारग्रहणं च विना वर्ण एव गृह्यते ॥ तेन 'उ' इत्युक्ते उवर्णः—उकाररूप ऊकाररूपश्च वत्वं वकारं प्राप्नोति स्वरे परे इत्यर्थः ।

**ऋवर्ण इति** । ऋवर्णस्य रकारो भवति स्वरे परे इत्यर्थः ।

**ऌवर्ण इति** । ऌवर्णस्य लकारो भवति स्वरे परे इत्यर्थः ॥

**एकार इति** । एकारस्य अय् भवति स्वरे परे इत्यर्थः ।

---

१ 'अक्षौहिण्यामित्यधिकः सप्तत्या ह्यष्टभिः शतैः ।
संयुक्तानि सहस्राणि गजानामेकविंशतिः ॥ १ ॥

क्वचित् स्वरवद्यकारः । यथा *अध्वपरिमाणे* । गव्यूतिः[1] । अन्यत्र–गवां मिश्रीभावे गोयूतिः । न व्यञ्जने स्वराः सन्धेयाः । देवीगृहम् ॥ ९ ॥

## ऐ आय् । १० ।

ऐकार आय् भवति स्वरे परे । नै अकः, नायकः ॥ १० ॥

## औ आव् । ११ ।

औकार आव् भवति स्वरे परे । तौ इह, ताविह ॥ ११ ॥

## य्वोर्लोपश् वा पदान्ते । १२ ।

पदान्ते स्थितानामयादीनां यकारवकारयोर्लोपश् वा भवति स्वरे परे । तौ इह, ताविह । ता इह । ते आगताः, तयागताः,

---

**क्वचिदिति** । क्वचित्प्रयोगान्तरे यकारः स्वरवदवसेय इत्यर्थः । स्वरेण तुल्यः स्वरवत् । स्वरे सति यत्कार्यं भवति तद्यकारे परेऽपि भवतीत्यर्थः । यथा अध्वपरिमाणे—मार्गपरिमाणे वाच्ये सति गो अग्रे यूतिः—अत्र यकारस्य स्वरत्वात् 'ओ अव्' इत्यवादेशो भवति । गव्यूतिः—क्रोशद्वयम् । अन्यत्र तु—मार्गप्रमाणाभावे गवां मिश्रीभावे—एकीभावे समूहीभवने गोयूतिरित्येव भवतीत्यर्थः ।

**एकार इति** । एकारस्य स्थाने अयादेशो भवति स्वरे परे इत्यर्थः ।

---

एवमेव रथानां तु सङ्ख्यानं कीर्तितं बुद्धैः ।
पञ्चषष्टिसहस्राणि षट्शतानि दशैव तु ॥ २ ॥
सङ्ख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरङ्गमैः ॥ ३ ॥
शतानि त्रीणि चान्यानि पञ्चाशत्तु पदातयः ॥

अर्थात्–गजाः २१८७० । रथाः २१८७० । अश्वाः ६६१० । पदातयः १०९३५० । सर्वयोगः २,१८,७०० इति ॥

[1] 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः ।

त आगताः । पटो इह, पटविह, पट इह । तस्मै एतत्, तस्मायेतत्, तस्मा एतत् । लोपशि पुनर्न सन्धिः । छन्दसि तु भवति । हे सखे इति । हे सखयिति । हे सखेति ॥ १२ ॥

**एदोतोऽतः । १३ ।**

पदान्ते स्थितादेकारादोकाराच्च परस्याऽकारस्य लोपो भवति । ते अत्र, तेऽत्र । पटो अत्र, पटोऽत्र ॥ १३ ॥

**सवर्णे दीर्घः सह । १४ ।**

सवर्णस्य सवर्णे परे सह दीर्घो भवति । श्रद्धा अत्र, श्रद्धाऽत्र । दधि इह, दधीह । भानु उदयः, भानूदयः । पितृ ऋणं, पितॄणम् । दण्ड अग्रं, दण्डाग्रम् ।

**'अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता ।**
**पूर्वदाघस्वर दृष्ट्वा परलोपो विधीयते ॥ १ ॥**

---

ननु 'त आगता' अत्र 'सवर्णे' इति तथा 'पट इहे' त्यत्र 'अ इ ए' इति च सन्धिः कथं न क्रियते ?, तत्राह—**लोपशीति** । लोपशि कृते पुनः पूर्वापरवर्णयोर्मिथो घटनस्वरूपः सन्धिः कार्यान्तरसाधनं च न भवति । यथा त आगताः । राजभ्याम् । अत्र 'अद्भि' इति 'आ' न भवति । 'नञ्युक्तमनित्य'मिति क्वापि लोपशि कृतेऽपि सन्धिर्भवति । यद्वा 'छन्दसि तु भवती'ति तुशब्ददर्शनात् कुत्रचिल्लौकिकोदाहरणेऽपि लोपशि कृते सन्धिर्भवति । तद्यथा—'दामोदरः', 'राजाश्वः,' 'दण्डीशः' इत्यादेषु कार्यान्तरसङ्घातरूपश्च सन्धिर्भवति । **हे सखेतीति** । यलोपे सन्धौ च कृते रूपमिदम् । **हे सखयितीति** तु लोपाभावे रूपमिति बोध्यम् ।

पुनर्विशेषमाह—छन्दसि वेदे लोपशि कृतेऽपि सन्धिर्भवति । यथा हे

**'सामान्यशास्त्रतो नूनं विशेषो बलवान्भवेत् ।
परेण पूर्वबाधो वा प्रायशो दृश्यतामिह' ॥ २ ॥**

**अ इ ए । १५ ।**

अवर्णे इवर्णे परे सह ए भवति । तत्र इदं, तवेदम् । मम इदं, ममेदम् । ***हलादेरीषादौ टेर्लोपो वक्तव्यः*** । हल इषा-हलीषा । लाङ्गल-ईषा-लाङ्गलीषा । मनस ईषा मनीषा । शक-अन्धुः शकन्धुः । कर्क-अन्धुः कर्कन्धुः । कुल अटा कुलटा । सीमन्-अन्तः सीमन्तः । पतत्-अञ्जलिः पतञ्जलिः । सार-अङ्गः-***सारङ्गः पशुपक्षिणोः***।साराङ्गोऽन्यः। शिव आइहि शिवेहि१ ५

सखे अग्ने इति-अत्र 'ऐ अय्' इत्ययादेशे 'य्योर्लोपश् वा' इति यकारलोपः । छान्दसिकत्वाच्च न सन्धिनिषेधः । तेन 'अ इ ए' इत्येकारादेशो भवति । )

ननु दधि इहेत्यत्र 'इ यं स्वरे' इति यत्वं कस्मान्न भवतीत्यत आह—**सामान्येति** । नूनं निश्चितं सामान्यशास्त्रतः-सामान्यसूत्रात् विशेषो—विशेषशास्त्रं विशेषसूत्रं बलवान् भवेत् । तत्र बहुव्यापकं सामान्यम् । अल्पव्यापको विशेषः । दधि इह इत्यत्र 'इ यं स्वरे' इति सामान्यसूत्रं, स्वराणां बहुत्वात् । 'सवर्णे दीर्घः' इति तु विशेषसूत्रं, तस्य सवर्णस्यैकत्वात् । पक्षान्तरमाह—**परेणेत्यादि** । वा अथवा व्याकरणे इह प्रायशो बाहुल्येन बहुषु स्थानेषु परेण अग्रेतनसूत्रेण पूर्वसूत्रस्य बाधो निषेधो दृश्यताम् । यथा 'इ यं स्वरे' इति सूत्रं प्राक् प्रतिपादितं तस्य हि 'सवर्णे दीर्घः' इति सूत्रेण बाधो भवति । अनेनोत्सर्गापवादावुक्तौ । ततः 'उत्सर्गापवादयोरपवादविधिर्बलवा'निति न्यायो दर्शितः । एकस्मिन्नेवोदाहरणे सूत्र-

१ 'हलीषा लाङ्गलीषा च मनीषाऽथो तथैव च ।
शकन्धुरथ कर्कन्धुः सीमन्तः कुलटा तथा ॥
पतञ्जलिश्च सारङ्ग एते प्रोक्ता हलादयः ॥'

## ओमि च । १६ ।

ओमि परे नित्यं टेर्लोपो भवति । अद्य-ओम् , अद्योम् ।।१६।।

## उ ओ । १७ ।

अवर्ण उवर्णे परे सह ओ भवति । गङ्गा-उदकं गङ्गोदकम् । तीर्थ-उदकं तीर्थोदकम् ।। १७ ।।

## ऋ अर् । १८ ।

अवर्ण ऋवर्णे परे सह अर् भवति । तव-ऋद्धिः तवर्द्धिः।।१८।।

## क्वचिदार् । १९ ।

अवर्ण ऋवर्णे परे सह समासे क्वचिदार् भवति । ऋण ऋणम् ऋणार्णम् । *तृतीयासमासे च* । सुखेन ऋतः सुखार्तः । शीतार्तः । दुःखार्तः । तृतीयेति किम् ? । परमर्त्तः।।१९।।

## ऌ अल् । २० ।

अवर्ण ऌवर्णे परे सह अल् भवति । तव-ऌकारः

---

द्वयसंभवे सामान्यविशेषयोर्यद्विशेषसूत्रं तत्प्रवर्त्तते । पूर्वोक्तपरोक्तयोश्च सूत्रयोर्यत्परोक्तं सूत्रं तद्भवति न तु पूर्वोक्तमिति भावः । एवं भानु-उदय इत्यत्र 'उ वम्' इति सामान्यम् , 'सवर्णे दीर्घः' इति विशेषः । तथा च विशेषशास्त्रेण दीर्घ एव भवतीति सिद्धम् ।

**सहेति** । उभयोर्योगेन पूर्वपरयोः स्थाने एकादेश ओकारो भवतीत्यर्थः ।

**तवर्द्धिरिति**—तव अग्रे ऋद्धिः । 'ऋ अर्' इत्यरादेशे 'जलतुम्बिका' न्यायेन रेफस्योर्ध्वगमने तवर्द्धिरिति सिद्धम् ।

**तृतीयेति** । तृतीयासमासान्ते परे इत्यर्थः । **क्वचिदिति** । क्वचित्प्रयोगान्तरे अवर्णे ऋवर्णे परे सति सह उभयोर्योगेन आर् भवतीत्यर्थः ।

नन्वत्र ऌकारोऽस्ति रेफो नास्ति अतः 'राद्यपो द्विः' इति कथं लगति,

तवल्कारः । ***ऋलृवर्णयोर्मिथः सावर्ण्यं वा वक्तव्यम्***। होतृ ऌकारः होतॄकारः, होत्लृकारः । ***रलयोः सावर्ण्यं वा वक्तव्यम्*** । परि-अङ्कः पर्य्यङ्कः, पल्यङ्कः ॥ २० ॥

## एऐ ऐ । २१ ।

अवर्ण एकारे ऐकारे च परे सह ऐकारो भवति । तव एषा तवैषा । तव ऐश्वर्यं तवैश्वर्यम् ॥ २१ ॥

## ओ औ औ । २२ ।

अवर्ण ओकारे औकारे च परे सह औकारो भवति । तव ओदनं तवौदनम् । तव-औन्नत्यं तवौन्नत्यम् ॥ २२ ॥

## ओष्ठोत्वोर्वौ समासे । २३ ।

अवर्णस्य ओष्ठोत्वोः परयोर्वा सह ओत्वं भवति समासे सति । बिम्ब-ओष्ठः बिम्बोष्ठः । बिम्बौष्ठः। स्थूल-ओतुः स्थूलोतुः, स्थूलौतुः । समासे किम् ? । तवौष्ठः ॥ २३ ॥

## इति स्वरसन्धिः ॥ ४ ॥

---

तत्राह—**रलयोरिति** । रेफलकारयोः सावर्ण्यं—सदृशत्वं वक्तव्यम् । तेन 'राद्यपो द्विः' इति ककारस्य द्वित्वे तवल्क्कार इति सिद्धम् ।

**अवर्णस्येति** । अवर्णस्य ओष्ठोत्वोः शब्दयोः परयोः औष्ठौत्वो-रोकारेण सह वा विकल्पेन अकारस्य ओकारो भवति समासे सति ॥

---

१ 'रलयोर्डलयोश्चैव शसयोर्बवयोस्तथा ।
वदन्त्येषाञ्च सावर्ण्यमलङ्कारविदो जनाः' ॥

# अथ प्रकृतिभाव उच्यते ।

## नाऽमी । १ ।

अदसोऽमीशब्दः सन्धिं न प्राप्नोति । अमी आदित्याः । अमी उष्ट्राः । अमी एडकाः । अदस इति किम् ? । अमी रोगस्तद्वान् अमी–अत्र अम्यत्र ॥ १ ॥

## य्वे द्वित्वे । २ ।

इ च ऊ च ए च–य्वे । इकारान्त ऊकारान्त एकारान्तश्च शब्दो द्वित्वे वर्तमानः सन्धिं न प्राप्नोति । ***मणीवादिवर्जम्*** [1] । अग्नी अत्र । पटू अत्र । माले आनय । मणीवादीति किम् ? । मणी इव मणीव । रोदसी इव रोदसीव । दम्पती इव दम्पतीव । जम्पती इव जम्पतीव ॥ २ ॥

---

**प्रकृतीति** । प्रकृतेर्भावः भवनं सत्ता–प्रकृतिभावः । प्रकृतेर्यथावस्थित-स्वरूपस्य भावोऽवस्थितिर्वा प्रकृतिभावः । सन्धियोग्या अपि स्वराः केचित्प्र-कृतिस्था एव तिष्ठन्ति । तस्मात्प्रकृतिरुच्यते । **अदस इति** । अदस् शब्दस्य जसि यः अमीशब्दो निष्पन्नः स सन्धिं न प्राप्नोति । 'अमी' शब्देन रोगवानप्युच्यते तन्निरासार्थम् 'अदसः' इति पदं प्रयुक्तम् । **अमी आदित्या इति** । अत्र इ यं स्वरे' इति सूत्रप्राप्तावपि सन्धिप्रतिषेधः ।

**मणीवादीति** । मण्यादयो न निषिद्धा किन्तु 'मणी इव' इत्या-दीन् शब्दान् वर्जयित्वा प्रकृतिभावो भवति । तथा च मण्यादीनां तु द्विव-चने ईकारान्तत्वेऽपि सन्धिर्भवत्येव ।

---

१ 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ।
ह्रियमाणौ तु तौ दृष्ट्वा मकिस्तत्रेदमब्रवीत्' ॥ २ ॥

**औ निपातः । ३ ।**

आकार ओकारो[1] निपात एकस्वरश्च सन्धिं न प्राप्नोति ।

**'ओत्तमैरीक्ष्यसे न त्वामामृतादेन्द्रतोऽखिलैः ।**
**आ एवं सर्ववेदार्थं आ एवं सद्वचो हरेः ॥ १ ॥**
**ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।**
**एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ २ ॥'**

आ एवं किल मन्यसे नो अत्र स्थातव्यम् । उ उत्तिष्ठ अपेहि । इ इन्द्रं पश्य । अ अपेहि ॥ ३ ॥

**हेहयोऽपि प्लुतः । ४ ।**

प्लुतश्च सन्धिं न प्राप्नोति । देवदत्त ३ एहि । हे ३ राम । राम हे ३ ॥ ४ ॥

---

**एकस्वरश्चेति** । ननु एकस्वरश्चेति पदं सूत्र नास्ति वृत्तौ कुतो लभ्यते इतिचेच्छृणु । तदर्थमाकारादारभ्य ओकारं यावत् 'औ' इति प्रत्याहारोऽङ्गीकार्य इति केचित् ।

**प्लुत इति** । यत्र प्लुतस्तत्र सन्धिर्न भवति । यथा भो देवदत्त ३ एहि । एवमन्यत्रापि । तद्यथा—'का ३ एषा प्रस्तुताङ्गी प्रचलितनयना हंसलीला व्रजन्ती, द्वौ पादौ कुङ्कुमार्द्रौ कनकविरचितौ नूपुरं शब्दयन्ती । इत्थं मार्गे गता सा बहुकुसुमलताबद्धवेणी स्वनन्ती ताम्बूलं वामहस्ते मदननिवसिता गुह्यशालां विवेश ॥' अत्रहि विचारे टेः प्लुतत्वं तेन सन्धिर्न क्वचित्तु सन्धिः ।

---

१ 'अहो आहो उताहो च नो हो हंहो अथो इमे ॥
मिथोयुक्ताश्च ओदन्ता निपाता अष्टधा मताः' ॥
आकारस्तु निपातो यो ङिदङिद्भेदतो द्विधा ।
तत्रापि च ङिदाकारः सन्धिं प्राप्नोति न त्वङित् ॥

**दूराद्धाने टेः प्लुतः । ५ ।**

दूराद्धाने गाने रोदने विचारे च टेः प्लुतो भवति ॥ ५ ॥

**इति प्रकृतिभावः ॥ ५ ॥**

# अथ व्यञ्जनसन्धिः ।

**अथ व्यञ्जनकार्य्यमुच्यते ।**

**चपा अबे जबाः । १ ।**

पदान्ते वर्तमानाश्चपा जबा भवन्त्यबे परे । षट्-अत्र षडत्र । वाक् यथा वाग्यथा ॥ १ ॥

**ञमे ञमा वा । २ ।**

पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवन्ति । वाक्-मात्रं वाग्मात्रं वाङ्मात्रम् । षट् मम । षड्मम । षण्मम ॥ ३ ॥

केचित्तु 'प्लुतोऽनितौ' इति सूत्रं पठन्ति । तेन प्लुतोऽपि इतिशब्दे परे सन्धिं प्राप्नोति । यथा हा तात इति, हा तातेति । देवदत्तेत्यादौ न सन्धिर्भवति ॥

॥ इति प्रकृतिभावः ॥

**अथेति** । अथ—प्रकृतिभावकथनानन्तरं व्यञ्जनकार्यमुच्यते । व्यञ्जनानां सन्धिः कथ्यत इत्यर्थः ।

**पदान्ते इति** । पदान्ते स्थिताश्चपा जबा भवन्ति । अर्थात् चटतकपानां स्थाने क्रमेण जडदगबा भवन्ति अबे परे इत्यर्थः ।

**ञमे इति** । चपानां ञमप्रत्याहारे परे विकल्पेन ञमा भवन्ति । अर्थात् चटतकपाना स्थाने क्रमेण ञणनङमा भवन्तीत्यर्थः । वाग्रहणात्पक्षे जबा अपि भवन्ति । वाङ्मात्रं वाग्मात्रम् । एकत्र ङः । अन्यत्र गः ।

**चपाच्छः शः । ३ ।**

चपादुत्तरस्य शकारस्य छो वा भवति अमे परे । वाक् शूरः वाक्छूरः ॥ ३ ॥

**हो झभाः । ४ ।**

चपादुत्तरस्य हकारस्य झभा वा भवन्ति । यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवति । तत् हविः । तद्धविः । तद्हविः । वाक् हरिः । वाग्घरिः । वाग्हरिः ॥ ४ ॥

**स्तोः श्चुभिः श्चुः । ५ ।**

स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च योगे शकारचवर्गौ यथासंख्येन भवतः । सकारस्य शकारः । तवर्गस्य चवर्गः । कस् चरति । कश्चरति । कस् शूरः । कश्शूरः । तत् चित्रं । तच्चित्रम् । तत् शास्त्रं । तच्छास्त्रम् ॥ ५ ॥

---

**चपादिति** । चपादुत्तरस्य शकारस्य छः छकारो भवति विकल्पेनेत्यर्थः । वाक् अग्रे शूरः । अनेन शकारस्य छकारः । वाक्छूरः । पक्षे वाक्शूर इति सिद्धम् । 'छः शः' इति विपरीतग्रहणात् वाक्श्चोततीत्यादौ छत्वं न ।

**ह इति** । यस्य वर्गस्य सम्बन्धी चपो हकारात्पूर्वं भवति तस्य वर्गस्य चतुर्थाक्षरो हकारस्थाने भवति । यथा ककारात्परस्य हस्य घः । चकारात्परस्य हस्य झः । टकारात्परस्य हस्य ढः । तकारात्परस्य हस्य धः । पकारात्परस्य हस्य भः ।

**'यद्वर्गस्य चपः पूर्वं हकारात्किल दृश्यते ।**
**हस्य स्थाने भवेद्वर्णस्तद्वर्गस्य चतुर्थकः ॥' इति ।**

वाक् अग्रे हरिः । अत्र हस्य घः । 'चपा अबे जबाः' इति कस्य गः । वाग्घरिः । वाचा कृत्वा हरिः सिंह इत्यर्थः ॥

**स्तोरिति** । स च तुश्च स्तुः, तस्य स्तोः । षष्ठ्येकवचनान्तम् ।

## न शात् । ६ ।

शकारादुत्तरस्य तवर्गस्य चुत्वं न भवति। विश् नः विश्नः। प्रश् नः प्रश्नः ॥ ६ ॥

## ष्टुभिः ष्टुः । ७ ।

सकारतवर्गयोः षकारटवर्गाभ्यां योगे ष्टुर्भवति। सकारस्य षकारः। तवर्गस्य टवर्गः। कस् षष्ठः कष्षष्ठः। कस् टीकते कष्टीकते। तत् टीकते तट्टीकते ॥ ७ ॥

## तोर्लि लः । ८ ।

तवर्गस्य लकारे परे लकारो भवति। तत् लुनाति तल्लुनाति। भवान् लिखति भवाँल्लिखति। अन्तःस्था द्विप्रभेदा रेफवर्जिता यवलाः सानुनासिका, निरनुनासिकाश्च। तत्र सानुनासिक एव नकारस्य लकारो भवति ॥ ८ ॥

## न षि । ९ ।

षकारे परे तवर्गस्य ष्टुत्वं न भवति। भवान् षष्ठः भवान् षष्ठः ॥ ९ ॥

---

श् च चुश्च श्चवस्तैः श्चुभिः। तृतीयाबहुवचनान्तम्। श् च चुश्च श्चुः। प्रथमैकवचनान्तम्। तेन सकारस्य शकारचवर्गयोगे पूर्वतः परत उभयत्रापि सम्बन्धे सति शकारः स्यात्, तवर्गस्य शकारचवर्गयोगे चवर्गः स्यादित्यर्थो लभ्यते।

**नशादिति**। शकारादुत्तरस्य तवर्गस्य चुत्वं चवर्गो न भवति। प्रश् अग्रे नः, विश् अग्रे नः, अत्र रूपद्वयेऽपि चवर्गस्य निषेधः। प्रच्छनं प्रश्नः। विशतीति विश्नः। 'विच्छ गतौ'। विच्छनं वा विश्नः।

**स्तोरिति**। स्तोः सकारतवर्गयोः षकारटवर्गयोगे षकारटवर्गौ यथासंख्यं भवत इत्यर्थः। सकारस्य षकारः, तवर्गस्य टवर्गः।

**न षीति**। षकारे परे तवर्गस्य टवर्गो न भवतीत्यर्थः।

**टोरन्त्यात् । १० ।**

पदान्ते वर्तमानाट्टवर्गात्परस्य स्तोः ष्टुर्न भवति । षट् नरः षण्नरः । षट् सीदन्ति षट् सीदन्ति ॥ १० ॥

**नः सक् छते । ११ ।**

नान्तस्य पदस्य छते परे समागमो भवति । ***टित्किता-वाद्यन्तयोर्वक्तव्यौ** । *टित्वादादौ कित्वादन्ते । राजन् चित्रं राजंश्चित्रम् । भवान् तनोति भवांस्तनोति ॥ ११ ॥

**शे चग्वा । १२ ।**

नान्तस्य पदस्य शे परे वा चगागमो भवति । भवान् शूरः। भवाञ्छूरः भवाञ्छ्छूरः भवाञ्च्शूरः भवाञ्शूरः ॥ १२ ॥

**ङ्णनो ह्रस्वाद्विः स्वरे । १३ ।**

ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवन्ति स्वरे परे पदान्ते ।

---

**टोरिति** । पदान्ते वर्तमानो यष्टवर्गस्तस्मादुत्तरयोः परयोः सकार-तकारयोः षकारटवर्गौ न भवतः, परं नाम्नवतिनगरीवर्जमित्यर्थः । नाम्न-वतिनगरीवर्जनात्—षण्णाम् । षण्णवतिः । षण्णगर्यः—इत्यत्र 'टोरन्त्यात्' इदं सूत्रं न प्रवर्त्तते, किन्तु 'ष्टुभिः ष्टुः' इति ष्टुत्वं भवति ।

**न इति** । नान्तस्य नकारान्तस्य पदस्य छते छठथचटतलक्षणे प्रत्या-हारे परे सक् इत्यागमो भवतीत्यर्थः । **टित्किताविति** । ट इत् यस्यासौ टित्, क इत् यस्यासौ कित् । टिच्च किच्च टित्कितौ, टित्कितावागमौ क्रमेण आद्यन्तयोर्विषये भवतः । एवञ्च टित् आदौ, कित् अन्ते इत्यर्थः । अत्र कित्वादन्ते भवति ।

**श इति** । नकारान्तस्य पदस्य शे शकारे परे वा विकल्पेन चगा-गमः स्यादित्यर्थः । **ङण्न इति** । ह्रस्वादुत्तराः परा ये ङकारणकारनका-रास्ते द्विर्भावमापद्यन्ते, द्वौ भवतः, स्वरे परे पदान्ते विषये इत्यर्थः ।

प्रत्यङ् इदं प्रत्यङ्ङिदम् । सुगण् इह सुगण्णिह । राजन् इह राजन्निह ॥ १३ ॥

**छः । १४ ।**

ह्रस्वादुत्तरश्छकारो द्विर्भवति ॥ १४ ॥

**खसे चपा झसानाम् । १५ ।**

झसानां खसे परे चपा भवन्ति । तव छत्रं तवच्छत्रम् । **※ क्वचिद्दीर्घादपि वक्तव्यः ※** । ह्री-छः ह्रीच्छः । म्ले-छः म्लेच्छः ॥ १५ ॥

**मोऽनुस्वारः । १६ ।**

मकारस्यानुस्वारो भवति हसे परे पदान्ते च । तम् हसति तं हसति । पटुम् वृथा पटुं वृथा ॥ १६ ॥

**नश्चाऽपदान्ते झसे । १७ ।**

नकारस्य मकारस्य चाऽपदान्ते वर्तमानस्यानुस्वारो भवति झसे परे । यशान् सि यशांसि । पुम् भ्यां पुंभ्याम् ॥ १७ ॥

**ञमा यपेऽस्य वा । १८ ।**

---

**खसे इति** । झसानां स्थाने चपा भवन्ति खसे परे । अत्र यथासंख्यगणनाच्छस्य तकारः संभवति । परं 'वर्ग्यो वर्ग्येण सवर्णः' इति वचनात् चकार एव क्रियते ।

पक्षान्तरमाह—**दीर्घादित्यादि**।क्वचित्कस्मिंश्चित्स्थाने दीर्घादुत्तरोऽपि छकारो द्विर्भवति । यथा म्ले अग्रे छः, ह्री अग्रे छः । रूपद्वयेऽप्यनेन द्वित्वे विहिते 'खसे चपा झसानाम्' इति चपादेशे म्लेच्छः ह्रीच्छ इति भवति ।

**मोऽनुस्वारः** । पदान्ते इति किम् ? । गम्यते । इहानुस्वारो न ।

अनुस्वारस्य ञमा वा भवन्ति यपे परे । अस्य–यपस्य सवर्णाः । शां तः, शा न्तः । तं करोति तङ्करोति । तं तनोति तन्तनोति । सं यन्ता सँय्यन्ता ॥ १९ ॥

**यवलपरे यवला वा । १९ ।**

अनुस्वारस्य यवलपरे यवला वा भवन्ति । संवत्सरः सँव्वत्सरः । य लोकं यँल्लोकम् ॥ १९ ॥

**ॐछन्दसि । २० ।**

छन्दस्यनुस्वारो ँ कारमापद्यते शषसहरेफेषु परतः । हंसः ँ सः ॥ २० ॥ **इति व्यञ्जनसन्धिः** ।

---

# अथ विसर्गसन्धिर्निगद्यते ।

**विसर्जनीयस्य सः । १ ।**

विसर्जनीयस्य[1] सकारो भवति खसे परे । कः तनोति । कस्तनोति ॥ १ ॥

---

**छन्दसीति** । अनुस्वारः ँकारमापद्यते शषसहरेफेषु परतः छन्दसि वेदे इत्यर्थः । हंसः, हँसः । शुचीं षत् । शुचीँषत् । वयं स्याम, वयँ स्याम । संहिता, सँहिता । तं रविः तँरविः ।

* इति व्यञ्जनसन्धिः *

**विसर्जनीयस्येति** । विसर्जनीयस्य सकाररेफोत्पन्नस्य कृष्णसर्पचक्षुराकारबिन्दुद्वयस्य स्थाने खसे परे सकारो भवतीत्यर्थः ।

---

१ 'अङ्कवद्बालवत्सस्य कुमारीस्तनयुग्मवत् ।
नेत्रवत्कृष्णसर्पस्य स विसर्ग इति स्मृतः' ॥

## शषसे वा । २ ।

विसर्जनीयस्य शषसे परे वा सकारो भवति । कः शेते कश्शेते । कः षण्ढः कष्षण्ढः । कः साधुः कस्साधुः ॥ २ ॥

## कुप्वोः ≍ क ≍ पौ वा । ३ ।

विसर्जनीयस्य कवर्गपवर्गसम्बन्धिनि खसे परे ≍ क ≍ पौ वा भवतः । कपावुच्चारणार्थौ । कः करोति क ≍ करोति, । कः पचति, क ≍ पचति । कः पठति क ≍ पठति । ***वाचस्पत्यादयः संज्ञाशब्दा निपातात्साधवः*** । यल्लक्षणैर्नानुत्पन्नं तत्सर्वं निपातात्सिद्धम् । ***तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च*** । तत् करः तस्करः । बृहत् पतिः बृहस्पतिः । वाचः पतिः वाचस्पतिः ॥ ३ ॥

---

**शषसे इति** । विसर्जनीयस्य शषसेषु परेषु शषसा एव वा भवन्ति । पक्षे विसर्जनीय एव तिष्ठतीत्यर्थः ।

**कुप्वोरिति** । विसर्जनीयस्य कवर्गपवर्गसम्बन्धिनि कखपफरूपे खसे परे ≍क≍पौ जिह्वामूलीयोपध्मानीयसंज्ञौ यथासंख्यं वा भवतः । पक्षे विसर्जनीय एव तिष्ठति । अयमर्थः— कखयोः परयोः ≍कः । पफयो परयोः ≍पः । कपौ–ककारपकारावुच्चारणार्थौ, अन्यथोच्चरितुमशक्यत्वात् । अतो वज्राकारगजकुम्भाकारौ तिष्ठतः ।

**सञ्ज्ञेति** । वाचस्पत्यादयः संज्ञाशब्दाः संज्ञावाचकाः कस्यापि नाम प्रतिपादकाः शब्दास्तेऽपि निपातात्साधवः, निपातसिद्धा एव ज्ञेयाः । यथा वाचस्पतिः । अत्र 'कुप्वोः ≍क≍पौ वा' इत्यस्य प्राप्तावपि विसर्जनीयस्य सकार एव निपात्यते । एवमग्रेऽपि ।

## अह्नो रोऽरात्रिषु । ४ ।

अह्नो विसर्जनीयस्य पदान्ते रो भवति रात्र्यादिगणवर्जितेषु परतः । अह्नः पतिः अहर्पतिः । अह्नः गणः अहर्गणः । अरात्रिष्विति विशेषणात्, अह्नः रात्रं अहोरात्रम् । अह्नः रूपम्, अहोरूपम् । अह्नः रथन्तरम्, अहोरथन्तरम् ॥ ४ ॥

## अतोऽत्युः । ५ ।

अकारात्परस्य विसर्जनीयस्य उकारो भवति अति परतः । कः—अर्थः कोऽर्थः ॥ ५ ॥

## हवे । ६ ।

अकारात्परस्य विसर्जनीयस्य उकारो भवति हवे परे । कः गतः को गतः । देवः याति, देवो याति । मनः रथः मनोरथः ॥ ६ ॥

## आदघे लोपश्च । ७ ।

अवर्णात्परस्य विसर्जनीयस्य लोपश्भवति अघे परे । देवाः अत्र, देवा अत्र । वाताः वान्ति, वाता वान्ति ॥ ७ ॥

## स्वरे यत्वं वा । ८ ।

अवर्णात्परस्य विसर्जनीयस्य स्वरे परे यत्वं वा भवति । देवा

---

**अह्न इति** । अहन्शब्दसम्बन्धिनो विसर्जनीयस्य पदान्ते रो भवति रात्र्यादिवर्जितेषु—रात्र्यादिभिन्नेषु शब्देषु परेषु सत्सु । रकारादिरात्रिरूपरथन्तरादिवर्जितेष्वित्यर्थः । उदाहरणम्—अहन् पतिः । अहन् अग्रे गणः । 'अह्नः' इति सूत्रेण उभयत्रापि नस्य सः । 'स्रोविसर्गः' अनेन सूत्रेण विसर्गस्य रः । 'राद्यपो द्विः'। अह्नो दिवसस्य पतिः अहर्पतिः। अह्नां गणः—अहर्गणः । अत्रान्तवर्तिनीं विभक्तिमाश्रित्य पदान्तत्वं ग्राह्यम् ।

अत्र देवायत्र ॥ ८ ॥

**भोसः । ९ ।**

भोस् भगोस् अघोस् इत्येतस्मात्परस्य विसर्जनीयस्य लोपश्च भवत्यबे परे । भोः एहि भो एहि । भगोः नमस्ते भगो नमस्ते । अघोः याहि अघो याहि ॥ ९ ॥

**नामिनो रः । १० ।**

नामिनः परस्य विसर्जनीयस्य रेफो भवति अबे परे । अग्निः अत्र अग्निरत्र । पटुः यजते पटुर्यजते ॥ १० ॥

**उषसो रो बुधे । ११ ।**

उषसो विसर्जनीयस्य रेफो भवति बुधे परे । उषः बुधः उषर्बुधः ॥ ११ ॥

**रेफप्रकृतिकस्य खपे वा । १२ ।**

रेफप्रकृतिकस्य विसर्जनीयस्य खपे परे वा रेफो भवति । गीः पतिः गीष्पतिः गीर्पतिः । धूःपतिः धूष्पतिः धूर्पतिः ॥ १२ ॥

**रः । १३ ।**

रेफसम्बन्धिनो विसर्जनीयस्य रेफो भवत्यबे परे । प्रातः अत्र प्रातरत्र । अन्तः गतः अन्तर्गतः ॥ १३ ॥

---

**नामिन इति ।** अवर्णवर्जस्वरात्परस्य विसर्जनीयस्य अबे परे रेफो भवति ।

**रेफेति ।** रेफप्रकृतिकस्य विसर्जनीयस्य वा रेफो भवति खपे परे इत्यर्थः ।

**र इति ।** रेफसंबन्धिनो रेफाजातस्य विसर्जनीयस्य रेफो भवति अब· प्रत्याहारे परे इत्यर्थः ।

## रि लोपो दीर्घश्च । १४ ।

रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः । पुनः रमते पुना रमते । शुक्तिः रूप्यात्मना भाति, शुक्ती रूप्यात्मना भाति ॥ १४ ॥

## सैषाद्धसे । १५ ।

सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपश् भवति हसे परे । सः चरति स चरति । एषः हसति एष हसति । सैषादिति संहिता-

**'सैष दाशरथी रामः सैष राजा युधिष्ठिरः ।**
**सैष कर्णो महात्यागी सैष भीमो महाबलः ॥'**

—इत्यादौ पादपूरणे सन्ध्यर्था ज्ञेया ।

**'यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत् ।**
**सेमां भूम्याददे सोषामित्यादीनामदुष्टता' ॥**

---

**शुक्ती रूप्यात्मना भातीति** । शुक्तिः रजताकारेण भासते इत्यर्थः । नन्वत्र लोपशि कृते सन्धिः कथं कृते इत्यग्रे वक्ष्यति **सैषादिति** । **संहितेति** । उभयत्रापि 'सैषाद्धसे' इति सूत्रे ऋजुतया कर्तव्ये सैषादिति सूत्रमध्ये या अघटमाना आकारैकारयोः 'ए ऐ ऐ' इति संहिता सन्धिर्दर्शिता सा सएषशब्दयोः—'सैष दाशरथी रामः' इत्यादि अष्टाक्षरात्मकपादपूरणार्थम् लोपशि कृतेऽपि यः 'ए ऐ ऐ' इति सन्धिर्भवति तज्ज्ञापनार्थमित्यर्थः ।

पुनर्वैदिकप्रयोगविश्लेषमाह—**यदुक्तमिति** । यत्सूत्रमिहास्मिन् शास्त्रे लौकिकाय प्रयोगाय व्याकरणप्रसिद्धांदाहरणायोक्तं सूत्रादि तद्वेदे छन्दसि बहुलमन्यथा भवति, अनिश्चितं भवेत् । क्वचिद्भवति क्वचिन्न भवतीत्यर्थः ।

**क्वचिन्नामिनो लोपश् ॥ १९ ॥**

नामिनः परस्य विसर्जनीयस्य क्वचिल्लोपश् भवत्यवे परे । भूमिः आददे, भूम्याददे ।

**क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥१॥**
**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥२॥**

बाहुलकं कतिविधमित्याह—**क्वचिदिति** । क्वचित्प्रयोगे अनुक्तस्यापि प्रवृत्तिः । अप्राप्तस्यासंभवतः सूत्रस्य प्रापणं प्रवृत्तिः । यथा 'लोपशि पुनर्न सन्धिः' इति निषिद्धत्वेऽपि 'अ इ ए' इति सन्धेः प्राप्तिः ।

क्वचित्प्रयोगेऽप्रवृत्तिः । कथितस्यापि सूत्रस्य निषेधः । यथा भूमिः अत्र आददे इत्यत्र 'नामिनो रः' इत्यस्याप्राप्तिः ।

क्वचिद्विभाषा विकल्पः । यथा वेदे देवैः देवेभिः । गवेशः गवीशः ।

क्वचिदन्यदेव—उक्तमन्यदेव भवति । यथा—भूमिः आददे । अत्र विसर्गलोपरूपं कार्यम् अन्यदेव भवति । एवममुना प्रकारेण विधेर्व्याकरण-सूत्रस्य विधानं करणं बहुधा बहुप्रकारं समीक्ष्य दृष्ट्वा बाहुलकं वैदिकप्रयोगं चतुर्विधं वदन्ति कथयन्ति । बुधा इत्यध्याहारः । वैदिकं चतुर्धोक्तम् ॥

अथ लौकिकप्रयोगः कतिधा भवतीत्याह—**वर्णागम इत्यादि** । एको वर्णागमः । च पुनर्वर्णविपर्ययः । पूर्वोच्चरितस्य स्थाने परवर्णोच्चारणं परवर्णस्य स्थाने पूर्ववर्णोच्चारणं वर्णविपर्ययः । पुनर्द्वावपरौ भेदौ । कौ तौ ? वर्णविकारनाशौ । पूर्वावस्थापरित्यागेन अवस्थान्तरग्रहणं विकारः । सर्वथा लोपो नाशः । वर्णानामक्षराणां विकारनाशौ वर्णविकारनाशौ । पञ्चमश्च भेदः—धातोस्ताभ्यां वर्णविकारवर्णनाशाभ्यां कृत्वा धातोर्योऽर्थातिशयः ( अधिकतारूपः कश्चिद्विशेषो यः स अर्थातिशयः ) तेन च यो भवति स

**वर्णागमो गवेन्द्रादौ, सिंहे वर्णविपर्ययः ।**
**षोडशादौ विकारः, स्याद्वर्णनाशः पृषोदरे ॥ ३ ॥**
**वर्णनाशविकाराभ्यां धातोरतिशयेन यः ।**
**योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ४ ॥**
**इति विसर्गसन्धिः ॥**

योग इति नाम्ना पञ्चमो भेदः । तत्तस्मान्निरुक्तं—निश्चयेन उक्तोऽर्थो यस्य तन्निरुक्तं व्याकरणोदाहरणम् ।

अथ लौकिकः प्रयोगः कतिधा भवतीत्याह—**वर्णागम इत्यादि । गवेन्द्रादौ वर्णागमः** । 'गवादेरवणागमोऽक्षादौ' इति । एवं हन् हिंसागत्योः। हन् अप्रत्ययः । सकारागमः हंस इति । सिंहे वर्णविपर्ययो भवति । यथा हिंस हिंसायाम् । 'मूर्तौ घनः' इति अप्रत्ययः । हिंस इति स्थिते,—हिनस्तीति विग्रहे ततः हिंस इति शब्दे हस्य स्थाने सः, सस्य स्थाने हः । एवं वर्णविपर्यये सिंह इति सिद्धम् । षोडशादौ यथा । षट् च दश च इति विग्रहे षष् दश अत्र 'षष उदों ढः' । षस्य उः दस्य डः—इति वर्णविकारः । ततः 'उ ओ' षोडश इति विकारोदाहरणम् । पृषोदरे वर्णनाशः । यथा पृषत् अग्रे उदरः। तकारस्य नाशो लोपः। 'उ ओ' । पृषोदरः । पृषन्ति बिन्दव उदरे यस्य स पृषोदरः मृगः । अथवा पृषन्मृगस्तस्योदरमिवोदरं यस्य यस्य स पृषोदरः॥

**वर्णनाशेति** । वर्णस्याक्षरस्य नाशविकाराभ्यां कृत्वा धातोरतिशयेन अर्थविशेषेण कृत्वा य उत्पद्यते सः प्राज्ञैः पण्डितैः योग इत्युच्यते । क्व ? । मयूरभ्रमरादिषु । मयूरः भ्रमर इत्याद्युदाहरणेष्वित्यर्थः । यथा रु शब्दे । एकत्र महीपूर्वः। अन्यत्र भ्रमन्पूर्वः । मह्यामतिशयेन रौति जल्पतीति मयूरः। भ्रमन् सन् अतिशयेन रौतीति भ्रमरः । 'नाम्नि च' इति डः प्रत्ययः । डित्त्वाट्टिलोपः । एकत्र विकारः हीस्थाने यू , अन्यत्र वर्णनाशः नकारस्य नाशः लोपः । एवञ्च मयूरः । भ्रमर इति सिद्धम् । अन्येषां मते तु एते पञ्चापि पृषोदरादिभेदा एव । **इति विसर्गसन्धिप्रक्रिया ॥ ५ ॥**

# अथ षड्लिंगाः ।

## तत्रादौ स्वरान्ताः पुँल्लिङ्गाः ।

अथ विभक्तिर्विभाव्यते । सा द्विधा, स्यादिस्त्यादिश्च ॥

**विभक्त्यन्तं पदम् । १ ।**

तत्र स्यादिर्विभक्तिनाम्नो योज्यते ॥ १ ॥

**अविभक्ति नाम । २ ।**

विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामोच्यते । 'कृत्तद्धितसमासाश्च प्रातिपदिकसंज्ञा' इति केचित् ॥ २ ॥

---

*** अथ स्वरान्ताः पुँल्लिङ्गाः ***

**अथेति** । पञ्चसन्धिकथनान्तरं विभक्तिर्विभाव्यते कथ्यते । विभज्यन्ते पृथक् क्रियन्ते कर्तृकर्मादयो यथा सा **विभक्तिः** । सा विभक्तिर्द्विधा-द्विप्रकारा । एका स्यादिः, सि औ जस् इत्यादिका । अपरा त्यादिः, तिप् तस् अन्ति इत्यादिका ॥

विभक्तेः प्रयोजनमाह—**विभक्त्यन्तमिति** । विभक्तिरन्ते यस्य तद्विभक्त्यन्तं । यस्यान्ते विभक्तिस्तत्पदमुच्यते । तत्र विभक्तिद्वयमध्ये स्यादिर्विभक्तिर्नाम्नोऽग्रे योज्यते स्थाप्यते दीयते । त्यादिर्विभक्तिर्धातोरग्रे योज्यते स्थाप्यते दीयते ॥

**विभक्तीति** । विभक्त्या रहितं धातोर्भ्वादेः पृथग्भूतमर्थयुक्तं शब्दरूपमकारादिवर्णरूपं तन्नाम उच्यते । शब्दरूपं नामेत्युक्ते पदस्यापि नामसंज्ञा स्यात्तन्निवारणार्थमविभक्तीति । तथा सति धातावतिव्याप्तिस्तन्निवारणार्थं धातुवर्जितमिति । तथा सति निरर्थकस्य टस् इत्यादि ध्वनेर्नामत्वं स्यात् , तन्निवारणार्थमर्थवदिति । इद्दग्लक्षणं नामोच्यते ॥ च पुनः कृतद्धितसमासाः सविभक्तिका अपि नामसंज्ञाः स्युरिति केचिदित्याहुः । कृतस्तृतीयवृत्तिप्रत्ययाः। तदन्ताः शब्दाः—धातवस्तद्धितान्ता समासाश्च नामसंज्ञका भवन्ति इति **केचिदिति** । पाणिन्याचार्या वदन्ति । एते सर्वेऽपि प्रातिपदिकसंज्ञका नाम-

**तस्मात् सि औ जस्, अम् औ शस्, टा भ्यां भिस्, ङे भ्यां भ्यस्, ङसि भ्यां भ्यस्, ङस् ओस् आम्, ङि ओस् सुप्। ३।**

तस्मान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति। तत्राऽप्यर्थमात्रैकत्वविवक्षायां प्रथमैकवचनं सि। अकारान्तः पुंलिङ्गो देवशब्दः। देव सि इति स्थिते। इकार उच्चारणार्थः, सेरिति विशेषणार्थश्च ॥ ३ ॥

**स्रोर्विसर्गः। ४।**

सकाररेफयोर्विसर्जनीयादेशो भवति, अधातो रसे पदान्ते च। देवः। द्वित्वविवक्षायाम् 'ओ औ औ' सूत्रेण देवौ। बहुत्वविवक्षायां प्रथमाबहुवचने जस्। जसो जकारस्येत्संज्ञायां तस्य लोपः। प्रयोजनं च 'जसी'ति विशेषणार्थः। देव अस् इति स्थिते दीर्घ-

---

संज्ञका उच्यन्ते। तन्मते प्रातिपदिकमिति नामपर्यायः ॥ कृदन्ता धातवः समासतद्धितयोः पदान्यपि नामसंज्ञकानीत्यर्थः।

**स्रोरिति**। स् च र् च स्रौ, तयोः स्रोः। सकारस्य रेफस्य च विसर्गो भवति अधातोः नाम्नः शब्दस्य रसे परे। चकारात्पदान्ते तु धातुनाम्नोरुभयोरपि ॥ नाम्नः सकाररेफयोः रसे परे पदान्ते च विसर्गादेशः। चकारात्पदान्ते धातोरपि सकाररेफयोर्विसर्गादेशः—यथा अचकाः ॥ रसे परे धातोर्न—यथा आस्ते बिभर्तीत्यादौ। अनेन विसर्गः। देवः इति सिद्धम् ॥

**द्वित्वविवक्षायामिति**। द्वयोर्वक्तुमिच्छा यत्र क्रियते तत्र औ, प्रथमा द्विवचनम्। यथा देवश्च देवश्चेत्येकशेषे 'सरूपाणामेकशेष एकविभक्तौ' इति। देव औ इति स्थिते। 'ओ औ औ'। देवौ ॥

विसर्गौ देवाः । *अकाराज्जसोऽसुक्क्वचित्* ।

देवासः । ब्राह्मणासः । द्वितीयैकवचने देव–अस् इति स्थिते—

**अम्शसोरस्य । ५ ।**

समानादुत्तयोरम्शयोरकारस्य लोपो भवत्यधातोः । देवम् । देवौ । बहुवचने–देव शस् इति स्थिते शकारः 'शसि' इति विशेषणार्थः ॥ ५ ॥

**सो नः पुंसः । ६ ।**

पुँल्लिङ्गात् समानादुत्तरस्य शसः सकारस्य नकारादेशो भवति ॥ ६ ॥

**शसि । ७ ।**

शसि परे पूर्वस्य स्वरस्य दीर्घो भवति । 'यदादेशस्तद्वद्भवति न तु वर्णमात्रविधौ' । देवान् । तृतीयैकवचने देव टा इति स्थिते । टकारोऽनुबन्धः 'टेन' इति विशेषणार्थः ॥ ७ ॥

---

* **क्वचिदिति** । क्वचित्प्रयोगान्तरे अकारात्परस्य जसः असुक् आगमो भवति छन्दसि वेदविषये । देव जस् । अनेन असुगागमः । कित्वादन्ते । 'स्वरहीनं' 'स्रोर्विसर्गः' 'सवर्णे दीर्घः' । देवास इति सिद्धम् ॥

**समानादिति** । समानात्परस्य अम्शस्सम्बन्धिनोऽकारस्य लोपो भवत्यधातोः । अक्विबन्ताच्छब्दादित्यर्थः । अनेन अकारलोपः । 'मोऽनुस्वारः' । देवम् ॥ देवौ । पूर्ववत् ।

**सो न इति** । पुंलिङ्गे वर्तमानात्समानादुत्तरस्याग्रतः शसः सकारस्य नकारादेशो भवतीत्यर्थः ॥

**शसीति** । पूर्वह्रस्वस्य दीर्घो भवति शसि परे । 'यदादेशस्तद्वद्भवति न तु वर्णमात्रविधौ' इति न्यायात् पूर्वस्य दीर्घः । देवान् ॥

**टेन । ८ ।**

अकारात्परष्टा इनो भवति । देवेन ॥ ८ ॥

**आङ्कि । ९ ।**

अकारस्य आकारादेशो भवति भकारे परे । देवाभ्याम् ॥९॥

**भ्यः । १० ।**

अकारात् परस्य भिसो भकारस्याकारादेशो भवति । "अ इ इ ए" । देव एस् इति स्थिते—'ए ऐ ऐ' । वृद्धिविसर्जनीयौ । देवैः । ***अकारस्य भिसि छन्दस्यकारो वा वक्तव्यः*** । देवेभिः । कर्णेभिः । चतुर्थ्येकवचने देव 'ङे इति स्थिते । ङकारो ङिकार्यार्थः सर्वत्र ॥ १० ॥

**ङेरक् । ११ ।**

अकारात् परस्य ङे इत्येतस्याऽगागमो भवति । कित्त्वादन्ते । 'ए अय्' । दीर्घः । देवाय । देवाभ्याम् । पूर्ववत् । चतुर्थीबहुवचने देव भ्यस् इति स्थिते—॥ ११ ॥

**एस्भि बहुत्वे । १२ ।**

---

**अङ्कीति** । केचित्तु 'आङ्कि' इति पठन्ति । तन्मते आ अत् भि इति त्रीणि पदानि । अकारस्य स्यादिविभक्तिसम्बन्धिभकारे परे आकारो भवति । 'देवाभ्या'मिति सिद्धम् ॥

**अकारस्येति** । अकारस्य भिसि परे छन्दसि वैदिकोदाहरणविषये एकारो वक्तव्यः । **दवेभिः । कर्णेभिरिति** वैदिकप्रयोगौ ।

**ङेरगिति** । अकारात्परस्य ङेइत्यस्य अगागमो भवति । सच कित्त्वादन्ते ।

**एस्भि इति** । अकारस्यैत्वमेकारो भवति बहुवचने स्भि सकारभकारादौ

अकारस्य एत्वं भवति सकारे भकारे च परे बहुत्वे सति। देवेभ्यः। पञ्चम्येकवचने देव ङसि इति स्थिते॥ १२ ॥

**ङसिरत्। १३।**

अकारात्परो ङसिरद्भवति। दीर्घः। देवात्। देवाभ्याम्। देवेभ्यः। षष्ठ्येकवचने देव ङस् इति स्थिते–॥ १३ ॥

**ङस् स्य। १४।**

अकारात्परो ङस् स्य भवति। देवस्य। षष्ठीद्विवचने देव ओस् इति स्थिते—॥ १४ ॥

**ओसि। १५।**

अकारस्य ओसि परे एत्वं भवति। 'ए अय्'। देवयोः ॥१५॥

**नुडामः। १६।**

समानात्परस्यामो नुडागमो भवति। टित्वादादौ। उकार उच्चारणार्थः॥ १६ ॥

---

विभक्तावित्यर्थः। देवेभ्यः॥

**ओसीति**। ओसीति ओस् शब्दस्य सप्तम्येकवचनान्तम्। अकारस्य ओसि परे एत्वमेकारो भवतीत्यर्थः।

**नुडिति**। समानात्परस्य आमः षष्ठीबहुचनस्येति व्याख्येयम्। अन्यथा 'आम् ङेः' इत्याम्। 'स्त्रियां य्वोः' इत्याम्। 'आमौ'इत्यप्याम्। 'किमोऽव्ययात्' इत्याम्। 'कासादिप्रत्ययान्तात्' इत्याम् च वर्तते, तत्रातिव्याप्तिः स्यात्। तेन षष्ठीबहुवचनस्याऽऽमो नुडागमो भवति। अधातोरेवेत्यनुवर्तितव्यम्। तेन अधातोरक्विबन्ताच्छब्दात्। टित्वादादौ। उकार उच्चारणार्थः। इति न इत्यागमः। आमो नुडिति कर्तव्ये नुडाम इति विप-

## नामि । १७ ।

नामिपरे पूर्वस्य दीर्घो भवति । देवानाम् । सप्तम्येकवचने देव ङि इति स्थिते । 'अ इ ए' । देवे । देवयोः पूर्ववत् । सप्तमी-बहुवचने देव सुप् इति स्थिते पकारस्येत्संज्ञायां लोपः । 'एस्भि बहुत्वे' इत्येत्वे कृते ॥ १७ ॥

## क्विलात् षः सः कृतस्य । १८ ।

कवर्गादिलाच्च प्रत्याहारादुत्तरस्य केनचित् सूत्रेण कृतस्य सकारस्य षकारादेशो भवति । देवेषु ॥ १८ ॥

## आमन्त्रणे सिर्धिः । १९ ।

आमन्त्रणमाभिमुखीकरणं तस्मिन्नर्थे विहितः सिर्धिसंज्ञो भवति ॥ १९ ॥

---

रीतकरणे नुटोऽनित्यत्वसूचकम् । तेन स्त्रीणां वारीणामित्यत्र 'नुडामः'इत्येव स्यात् । 'नामिनः स्वरे' इति भवति ॥

**'क्विलात्षः सः कृतस्य'** ॥ कुश्च इलश्च क्विलं, तस्मात् । पञ्च-म्येकवचनम् । केनचित्सूत्रेण कृतस्यैव सकारस्य षकारो भवति न त्वकृतस्य =स्वाभाविकस्य । अन्ते स्थितस्यापि सस्य षत्वं न भवति । यथा 'हरिस्तत्रे'-त्यादौ न षत्वम् । तथा नुम्विसर्गान्तरेऽपि षत्वं, यथा हवींषि हविःषु इत्यादि । पूर्वं हविस्शब्दोऽस्तीत्यर्थः ।

**आमन्त्रण इति** । आमन्त्र्यते आहूयते पुरुषोऽनेनेत्यामन्त्रणं, तस्मिन्, सप्तम्येकवचनान्तम् । **आमन्त्रणमिति** । कोऽर्थः ? । आभि-मुखीकरणम् । अनभिमुख आसमन्तात् प्रकारेण अभिमुखः क्रियतेऽनेनेति आभिमुखीकरणम् । तस्मिन्नर्थे विहितः कृतो यः सिः प्रथमैकवचनरूपः स धिसंज्ञो भवति ।

## समानाद्धेर्लोपोऽधातोः । २० ।

समानादुत्तरस्य धेर्लोपो भवत्यधातोः । आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक् प्रयोगः । हे देव । हे देवौ । हे देवाः । एवं घटपट-स्तम्भकुम्भादयोऽप्यकारान्ताः पुँल्लिङ्गाः । अकारान्तानामपि सर्वादीनां तु विशेषः । 'सर्व, विश्व, उभ, उभय, अन्य, अन्यतर, इतर, डतर, डतम, कतर, कतम, सम, सिम, नेम, एक, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व, अन्तर, त्यद्, तद्, यद्, एतद्, इदम्,

---

**समानादिति**। समानादुत्तरस्य धेर्लोपो भवति । अत्र समानादिति ह्रस्वसमानात्परस्येति व्याख्येयम् । अन्यथा हे हाहाः, हे हूहूः, हे वातप्रमीः, इत्यादौ विरुध्यति । अधातोः—अक्विबन्ताच्छब्दात् । अक्विबन्तोऽधातु-रुच्यते क्विबन्तश्च शब्दो धातुरित्यभिप्रायः ।

**प्रागिति**। पूर्वं हे शब्दः । एतद्धेतुः । अभिमुखस्य भाव आभि-मुख्यं संमुखत्वं वा, तस्याभिव्यक्तये प्रकटीकरणाय हेशब्दः प्राक्—आदौ प्रयुज्यते इत्यर्थः ।

सर्वासां विभक्तीनामेकत्र प्रयोगो यथा—

**'वृक्षस्तिष्ठति कानने कुसुमिते, वृक्षं लताः संश्रिता,**
**वृक्षेणाभिहता गजा निपतिता, वृक्षाय देयं जलम् ।**
**वृक्षादानय मञ्जरीं कुसुमितां, वृक्षस्य शाखोन्नता,**
**वृक्षे नीडमिदं कृतं शकुनिना, हे वृक्ष ! किं पश्यसि ॥'**

**अकारान्तानामिति**। यद्यपि सर्वादयोऽकारान्तास्तथापि सर्वादीनां विशेषो देवशब्दात्कश्चिद्भेदोऽस्ति । के ते सर्वादय इत्याह—**सर्वेति**। विश्वशब्दस्य सकलार्थवाचकत्वे सर्वादित्वं, न तु जगद्वाचकत्वे । जगद्वाच-कत्वे तु कुलशब्दवत् । समः—अतुल्यार्थः—सर्वार्थवाचकः । तुल्यार्थत्वे तु 'राज्ञा समाय' इत्यत्र न सर्वादित्वम् । सिमः—समग्रार्थवाचकः । नेमः

अदस्, द्वि, किम्, युष्मद्, अस्मद्, भवतु' एते सर्वादयस्त्रिलिङ्गाः। तत्र पुँल्लिङ्गत्वेन रूपं ज्ञेयम्। सर्वः। सर्वौ। बहुवचने सर्व जस् इति स्थिते॥ २०॥

## जसी। २१।

सर्वादेरकारान्तात्परो जस ई भवति। 'अ इ ए'। सर्वे। सर्वम् सर्वौ सर्वान्। 'अम्शसोरस्य'। 'सो नः पुंसः'। 'शसि'। पूर्वस्य दीर्घः। तृतीयैकवचने सर्व इन इति स्थिते॥ २१॥

---

खण्डवाचकः। पूर्वादीनां तु व्यवस्थायामेव सर्वादित्वम्। दक्षिणशब्दस्य प्रावीण्ये शृङ्गारनायकवाचकत्वे च न सर्वादिकार्यम्। अन्यत्र दक्षिणदेशवाच्यत्वे सर्वादित्वम्। उत्तरशब्दस्य उत्तरदिग्देशवाच्यत्वे सर्वादित्वं, प्रतिवाक्ये तु न सर्वादि कार्यम्। अधरस्य हीनार्थत्वे सर्वादित्वं, न त्वोष्ठवाचकत्वे। स्वशब्दस्य ज्ञातिधनान्यवाचित्वे—ज्ञातिधनादिवर्जं किन्तु आत्मात्मीयार्थे वाच्ये सर्वादित्वम्। 'ज्ञातावात्मनि चात्मीये धने स्वाख्या प्रवर्तते' इति। स्वा ज्ञातयः, स्वानि द्रव्याणि इत्यत्र सर्वादित्वं न। अन्यत्र तु स्वस्मै रोचते, स्वे पुत्राः स्वस्मै पुत्राय देहि। अत्र सर्वशब्दवत्। अन्तरशब्दस्य बहिर्योगे उपसंव्याने च सर्वादित्वं नान्यत्र। 'मध्ये छिद्रे विशेषे च व्यवधाने बहिर्युजि। उपसंव्यानने प्राज्ञाः, षडर्थमन्तरं विदुः॥' अन्तरस्मै गृहाय। नगरबाह्याय चाण्डालादिगृहायेत्यर्थः। पुरि तु न भवति-अन्तरायै पुरे कुप्यति। चाण्डालादिबाह्यपुर्यै इत्यर्थः। वस्त्रान्तरेण पिहितं वस्त्रमुपसंव्यानम्। 'अन्तरीयं निवसनमुपसंव्यानमित्यपि।' तत्रार्थे अन्तरे अन्तरा वा शाटकाः। अन्तरस्मै शाटकाय। वस्त्रान्तरेण वृताय शाटकायेत्यर्थः।

उभशब्दस्य त्वच्छब्दस्य भवच्छब्दस्य द्विशब्दस्य च तृतीयासमासे तथा हेत्वर्थे सर्वा विभक्तयो भवन्ति तदर्थम्। 'अव्ययात्सर्वनाम्नष्टेः प्रागकच्' इत्यकच्प्रत्ययार्थं च सर्वादिमध्ये ग्रहणम्। यथा-उभौ हेतू। उभाभ्यां हेतु-

**षुर्नो णोऽनन्ते । २२ ।**

षकाररेफऋवर्णेभ्यः परस्य नकारस्य णकारादेशो भवति । अन्ते स्थितस्य न भवति—सर्वानित्यादौ ॥ २२ ॥

**अवकुप्वन्तरेऽपि । २३ ।**

अवप्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेऽपि नस्य णो भवति नान्येन । सर्वेण । सर्वाभ्याम् । 'आद्धि' इत्यात्वम् । सर्वैः । चतुर्थ्येकवचने सर्व ए इति स्थिते ॥ २३ ॥

**सर्वादेः स्मट् । २४ ।**

सर्वादेरकारान्तात्परस्य चतुर्थ्येकवचनस्य स्मडागमो भवति । 'ए ऐ ऐ' । सर्वस्मै । सर्वाभ्याम् । सर्वेभ्यः । पञ्चम्येकवचने सर्व अत् इति स्थिते ॥ २४ ॥

---

भ्याम् । उभयोः हेत्वोः । त्वत् हेतुः । त्वतं हेतुम् । त्वता हेतुना । त्वतं हेतवे । द्वौ हेतू । द्वाभ्यां हेतुभ्याम् । द्वयोर्हेत्वोः । भवान् हेतुः । भवन्तं हेतुम् । भवता हेतुनेत्यादि । तथा अज्ञातौ उभौ उभकौ । एवं द्वकौ । भवकान् । भवकन्तौ । भवकन्तः । त्वकत् इत्यादि । त्यच्छब्दः प्रायश्छन्दस्येव । एते सर्वादय उच्यन्ते कथ्यन्ते । त्रिलिङ्गाः-लिङ्गत्रयधारिणः । पुंलिङ्गस्त्रीलिङ्गनपुंसकलिङ्गा इति यावत् ।

**सर्व इति** । सरति प्रसरतीति सर्वः । **षकारेति** । अन्ते पदान्ते स्थितस्य व्यञ्जनस्य नकारस्य णकारो न भवतीत्यर्थः । नन्वत्र रेफस्याग्रे नकारो नास्ति किंतु मध्ये वकारेकारौ स्तः तत्कथं नकारस्य णकारः स्यादित्याह—'**अवकुप्वन्तरेऽपीति** । अवश्च कुश्च पुश्च अवकुपवः, तैरन्तरमं-वकुप्वन्तरं तस्मिन् । अवप्रत्याहारस्यान्तरे कवर्गस्यान्तरे पवर्गस्यान्तरे पवर्गस्यान्तरे, अपिशब्दात् जिह्वामूलीयोपध्मानीयानुस्वारयुग्विसर्गाणामपि व्यवधाने अन्तरे णत्वं वक्तव्यमित्यर्थः । सर्वेण ॥

**अतः सर्वादेः । २५ ।**

सर्वादेरकारान्तात्परस्याऽतः स्मडागमो भवति । सर्वस्मात् । सर्वाभ्याम् । सर्वेभ्यः । षष्ठ्येकवचने सर्व अस् इति स्थिते । 'ङस् स्य' । सर्वस्य । 'ए अय्' । सर्वयोः । सर्व आम् इति स्थिते ॥२५॥

**सुडामः । २६ ।**

सर्वादेः परस्यामः सुडागमो भवति । सर्वेषाम् । सप्तम्येकवचने सर्व ङि इति स्थिते ॥ २६ ॥

**ङि स्मिन् । २७ ।**

सर्वादेरकारात्परो ङिः स्मिन् भवति । सर्वस्मिन् । सर्वयोः । सर्वेषु । हे सर्व । हे सर्वौ । हे सर्वे । एवं विश्वादीनामेकशब्दपर्यन्तानां रूपं ज्ञेयम् , डतरडतमौ विहाय । तौ प्रत्ययौ । ततस्तदन्ताः शब्दा ग्राह्याः । पूर्वादीनान्तु विशेषः । पूर्वः । पूर्वौ । ***पूर्वादीनां तु नवानां जसि इकारो वा वक्तव्यः***। पूर्वे पूर्वाः । परे पराः ।

---

**अत इति** । अकारान्तात्सर्वादेः शब्दात्परस्य ङसिस्थाने जातस्य अत् इत्यस्य स्मडागमो भवति ।

एवं सर्वशब्दरीत्या डतरडतमौ विहाय तद्वर्जानां विश्वादीनामेकशब्दपर्यन्तानां शब्दानां रूपमवसेयम् । परं डतरडतमौ विहाय वर्जयित्वा । यतस्तौ प्रत्ययौ तद्धितोद्भवौ । अतस्तदन्ताः कतरकतमादिशब्दा ग्राह्याः । अन्यतरस्य पृथग्ग्रहणेन अन्यतमस्य प्रतिषेधः । अन्यत्सर्ववत् ।

विशेषमाह—**पूर्वादीनामिति** । तु पुनः पूर्वादीनां नवानां शब्दाना जस ईकारो वा वक्तव्यः । वा सर्ववज्जसीत्यर्थः । अन्यत्र पक्षे देववत् । पूर्वे पूर्वाः । परे पराः । इत्यादि । **पूर्वादिभ्य इति** । पुनः पूर्वादीनां नवानां ङसिश्च ङिश्च ङसिङी तयोः ङसिङ्योर्विषये स्मात्स्मिनादेशौ वा वक्तव्यौ । पञ्चम्या एकवचने एकत्र सर्ववत् । एकत्र देववत् ।

इत्यादि । ***ङसिङ्योः स्मात्स्मिनौ वा वक्तव्यौ*** । पूर्वस्मात् पूर्वात् । पूर्वस्मिन् पूर्वे । इत्यादि । ***प्रथमचरमतयाऽयडल्पार्द्धकतिपयनेमानां जसीकारो वा वक्तव्यः*** । प्रथमे प्रथमाः । चरमे चरमाः । शेषं देववत् । तयाऽयडौ प्रत्ययौ । ***तीयस्य सर्वशब्दवद्रूपं ङित्सु वा वक्तव्यम्*** । द्वितीयस्मै । द्वितीयाय । द्वितीयस्मात् । द्वितीयात् । द्वितीयस्मिन् । द्वितीये । एव तृतीयः । उभशब्दो नित्यं द्विवचनान्तः । उभौ । उभौ । उभाभ्याम् । उभाभ्याम् । उभाभ्याम् । उभयोः । उभयोः । हे उभौ । उभयशब्दस्य द्विवचनाऽभावादेकवचनबहुवचने भवतः । उभयः । उभये । उभयम् । उभयान् । उभयेन । उभयैः । उभयस्मै । उभयेभ्यः । इत्यादि । अकारान्तः पुंलिङ्गो मासशब्दः ॥ २७ ॥

**मासस्याऽल्लोपो वा । २८ ।**

मासशब्दस्याऽकारस्य लोपो वा भवति सर्वासु विभक्तिषु परतः ॥ २८ ॥

---

पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् पूर्वे । अन्यत्र सर्ववत् ।

**प्रथमेति** । प्रथमचरमाल्पार्धकतिपयानां केवलं जसि विकल्पः । शेषं देववत् ॥ तयाऽयटौ प्रत्ययौ ततस्तदन्ताः शब्दा ग्राह्याः । द्वितये द्वितयाः । द्वये द्वयाः । शेषं देवशब्दवत् ।

**तीयस्येति** ॥ तीयप्रत्ययान्तस्य द्वितीयतृतीयशब्दयुग्मस्य असर्वादित्वेऽपि ङित्सु वचनेषु विकल्पेन सर्वद्रूपम् । ङित्सु-ङेङसिङसिङिषु वा सर्ववत्त्वमित्यर्थः ।

**मासेति** । मासशब्दस्याऽकारस्य लोपो भवति वा विकल्पेन शसादौ स्वरे परे इत्यर्थः । सर्वविभक्तिषु परत इत्यर्थ इत्येके ।

**हसेपः सेर्लोपः । २९ ।**

हसन्तादीबन्ताच्च परस्य सेर्लोपो भवति । माः—मासः । मासौ मासौ । मासः—मासाः । मासं-मासं । मासौ-मासौ । मासः मासान् । मासा-मासेन । माभ्यां मासाभ्यां । माभिः मासैः । मासे मासाय । माभ्यां । मासाभ्यां-माभ्यः मासेभ्यः । मासः मासात् । माभ्यां मासाभ्यां । माभ्यः मासेभ्यः । मासः मासस्य । मासोः मासयोः । मासाम् मासानाम् । मासि मासे । मासोः मासयोः । मास्सु मासेषु । हे माः हे मास । हे मासौ हे मासौ । हे मासः हे मासाः ।

आकारान्तः पुंल्लिङ्गः सोमपाशब्दः । सोमपाः । सोमपौ ॥ सोमपाः । अधातोरिति विशेषणाद्धेर्लोपो नास्ति । हे सोमपाः । सोमपाम् । सोमपौ । बहुवचने सोमपा अस् इति स्थिते ॥ २९ ॥

**आतो धातोर्लोपः । ३० ।**

धातुसम्बन्धिन आकारस्य लोपो भवति शसादौ स्वरे परे । सोमपः ॥ सोमपा । सोमपाभ्याम् । सोमपाभिः । सोमपे । सोमपाभ्याम् । सोमपाभ्यः । सोमपः । सोमपाभ्याम् । सोमपाभ्यः । सोमपः । सोमपोः । सोमपाम् । सोमपि । सोमपोः । सोमपासु । एवं कीलालपाशङ्खध्मा-प्रभृतयः । इकारान्तः पुंल्लिङ्गो हरिशब्दस्तस्य प्रथमैकवचने—हरिः ३०

---

आकारान्तो हाहाशब्दस्तस्य च अक्विबन्तत्वान्न धातुसंज्ञा ।

इकारान्तसाधनमाह—**इकारान्त इति ।** इकारान्तो हरिशब्दः दशार्थवाचकः । तथाहि—'अर्कमर्कटमण्डूकविष्णुवासववायवः । तुरङ्गसिंहशीतांशुयमाश्च हरयो दश' इति ।

## औ यू । ३१ ।

इकारान्तादुकारान्ताच्च पर औकारो यूत्वमापद्यते। इ ऊ भवतः। हरी ॥ ३१ ॥

## ए ओ जसि । ३२ ।

इकारान्तस्य उकारान्तस्य च जसि परे एकार ओकारश्च भवति । हरयः ॥ ३२ ॥

## धौ । ३३ ।

इकारान्तस्य उकारान्तस्य च धिविषये एकार ओकारश्च भवति । हे हरे । हे हरी । हे हरयः । हरिम् । हरी । हरीन्॥३३॥

## टा नाऽस्त्रियाम् । ३४ ।

इकारान्तादुकारान्ताच्च परष्टा ना भवत्यस्त्रियाम् । हरिणा । हरिभ्यां । हरिभिः । हरि–ङे –इति स्थिते ॥ ३४ ॥

## ङिति । ३५ ।

इकारान्तस्य उकारान्तस्य च ङिति परे एकार ओकारश्च भवति । हरये । हरिभ्याम् । हरि ङसि इति स्थिते ॥ ३५ ॥

---

यू इति । इश्च उश्च यू । इकारान्तात्परस्य 'औ' इत्यस्य 'ई' भवति । उकारान्तात्परस्य 'औ' इत्यस्य च 'ऊ' आदेशो भवतीत्यर्थः ।

**ए ओ इति** । इकारस्य जसि परे एकारो भवति उकारस्य च ओकारो भवतीत्यर्थः ।

**टानेति** । इकारान्तादुकारान्ताच्च शब्दात्परो यः टा इति तृतीया-विभक्त्येकवचनन्तस्य स्थाने 'ना' इत्यादेशो भवति पुंलिङ्गे नपुंसकलिङ्गे चेत्यर्थः । एवञ्च स्त्रीलिङ्गे न भवति ।

**ङसिङसोरस्य । ३६ ।**

एदोद्भ्यां परस्य ङसिङसोरकारस्य लोपो भवति । हरेः । हर्योः । हरीणाम् । हरि–ङि इति स्थिते ॥ ३६ ॥

**ङेरौ ङित् । ३७ ।**

इदुद्भ्यामुत्तरस्य ङेरौ भवति स च ङित् ॥ ३७ ॥

**ङिति टेः । ३८ ।**

ङिति परे टेर्लोपो भवति । हरौ । हर्योः । हरिषु । एवमग्निगिरिरविकविप्रभृतयः पुल्लिङ्गा एतैरेव सूत्रैः सिध्यन्ति । उकारान्ताश्च विष्णुवायुभानुप्रभृतय एतैरेव सूत्रैः सिध्यन्ति । भानुः । भानू । भानवः । भानुम् । भानू । भानून् । भानुना । भानुभ्यां । भानुभिः । भानवे । भानुभ्यां । भानुभ्यः । भानोः । भानुभ्यां । भानुभ्यः । भानोः । भान्वोः । भानूनाम् । भानौ । भान्वोः । भानुषु । हे भानो । हे भानू । हे भानवः । इत्यादि ।

सखिशब्दस्य भेदः । सखि सि इति स्थिते ॥ ३८ ॥

**सेर्डाऽधेः । ३९ ।**

सखिशब्दात्परस्य सेरधेर्डा भवति स च ङित् । ङित्वाट्टिलोपः । सखा । अधेरिति विशेषणादेकारो धिविषये । हे सखे ॥ ३९ ॥

---

**ङसीति ।** एकारौकाराभ्यां परस्य पञ्चमीषष्ठ्येकवचनसम्बन्धिनाऽकारस्य लोपो भवतीत्यर्थः ।

**भेद इति ।** इकारान्तस्यापि सखिशब्दस्य हरिशब्दापेक्षया भेदो विशेषोऽस्तीत्यर्थः । तमाह—**सेर्डेति** ।

**ऐ सख्युः । ४० ।**

सखिशब्दस्यैकारो भवति पञ्चसु परेषु । षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः ॥ ४० ॥

**द्विवचनस्या वा छन्दसि । ४१ ।**

द्विवचनस्य औ आ भवति वेदे । सखायौ । सखाया । सखायः । सखायम् । सखायौ । सखीन् । सखि टा इति स्थिते ॥ ४१ ॥

**सखिपत्योरीक् । ४२ ।**

सखिपतिशब्दयोरीगागमो भवति टाङेङिषु परतः । दीर्घत्वान्न ना । सख्या । 'आगमजमनित्यम्' इति न्यायात्, आगमजं कार्यमनित्यं स्यात् वा छन्दसि इत्यर्थः । सखिना । सखिभ्यां । सखिभिः । सख्ये सखिभ्याम् सखिभ्यः । सखि ङसि इति स्थिते ॥ ४२ ॥

**ऋङ् ङे । ४३ ।**

सखिपतिशब्दयो ऋगागमो भवति ङसिङसोरकारे परे । सख्यृ अस् इति स्थिते ॥ ४३ ॥

**ऋतो ङ उः । ४४ ।**

---

**ए इति** । सखिशब्दस्य घिवर्जितेषु पञ्चसु स्यादिषु वचनेषु परेषु ऐकारादेशो भवति । 'शत्रुवदादेश' इति वचनात्सर्वस्यापि न कथमैकारः । तत्रोच्यते—**षष्ठीनिर्दिष्टेति** । षष्ठ्या विभक्त्या निर्दिष्टः कथितः उच्चरितः सूत्रमध्ये यः शब्दस्तस्य प्राप्त आदेशस्तस्याऽन्तस्य भवति न तु सर्वस्य । यथा 'ऐ सख्युः' इत्यत्र सखिशब्दस्य षष्ठ्या निर्दिष्टत्वात्सखिशब्दस्य प्राप्त एकारादेशः सखिशब्दस्यान्तो य इकारस्तस्य भवति ॥

**द्विवचनस्येति** । द्विवचनस्य प्रथमाद्विवचनस्य औ इत्यस्य छन्दसि वेदे वा आ भवति । सखाया ॥

ऋकारान्तात्परस्य ङसिङसोरकारस्य उकारो भवति स च डित् । डित्त्वाट्टिलोपः । सख्युः । सखिभ्यां । सखिभ्यः । सख्युः । सख्योः । सखीनाम् । सप्तम्येकवचने । 'ङेरौ डित्' इत्यौकारे कृते सखिपतिशब्दयोरीगागमो भवति । सख्यौ सख्योः सखिषु ।

पतिशब्दस्य प्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया । तृतीयादौ तु सखिशब्दवत्प्रक्रिया । पतिः पती पतय इत्यादि ***पतिरसमास एव सखिशब्दवद्वक्तव्यः*** । ततः समासान्तस्य नादयो भवन्ति । प्रजापतिना । प्रजापतये इत्यादि ।

द्विशब्दो नित्यं द्विवचनान्तः । द्वि–औ इति स्थिते ॥ ४४ ॥

## त्यदादेष्टेरः स्यादौ । ४५ ।

त्यदादेष्टेरेकारो भवति स्यादौ परे । द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । त्यदादीनां घेरभावः ।

त्रिशब्दो नित्यं बहुवचनान्तः । त्रि जस् इति स्थिते 'ए ओ जसि' इत्येकारे कृते अयादेशः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः ॥ ४५ ॥

## त्रेरयङ् । ४६ ।

त्रिशब्दस्याऽयङादेशो भवति नामि परे । ***ङिदन्त्यस्य**

---

**सखिशब्दवदिति** । पत्या, पत्ये, पत्युः, पत्युः, पत्यौ इति ॥

**त्यदादेरिति** । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि किम् युष्मद् अस्मद् एते त्यदादयः । त्यदादेः शब्दस्य 'अन्त्यस्वरादिष्टिः' इति संज्ञाप्रक्रियोक्तलक्षणायाः टेः स्यादौ विभक्तौ परतोऽकारो भवतीत्यर्थः ।

वक्तव्यः ॐ । त्रयाणाम् । त्रिषु ॥ कतिशब्दो नित्यं बहुवचनान्तः । कति जस् इति स्थिते । ॐकतिशब्दाज्जश्शसोर्लुग्वक्तव्यःॐ । इति जश्शसोर्लुक् । **लुकि न तन्निमित्तम्** । कति । कति । कतिभिः । कतिभ्यः २ । कतीनाम् । कतिषु । त्रिषु लिङ्गेषु चायं सरूपः ।

ईकारान्तः पुँल्लिङ्गः सुश्रीशब्दः । सुश्रीः । सुश्री—औ इति स्थिते ॥ ४६ ॥

## य्वोर्धातोरियुवौ स्वरे । ४७ ।

धातोरिकारोकारयोरियुवौ भवतः स्वरे परे । सुश्रियौ सुश्रियः । हे सुश्रीः । हे सुश्रियौ हे सुश्रियः । सुश्रियम् सुश्रियौ सुश्रियः । सुश्रिया सुश्रीभ्याम् सुश्रीभिः । सुश्रिये सुश्रीभ्याम् सुश्रीभ्यः । सुश्रियः सुश्रीभ्याम् सुश्रीभ्यः । सुश्रियः सुश्रियोः सुश्रियाम् । सुश्रियि सुश्रियोः सुश्रीषु ॥ तथैव सुधीशब्दः । सुधीः सुधियौ इत्यादि ॥ एवमुकारान्तः पुँल्लिङ्गः स्वयम्भूशब्दः । स्वयम्भूः स्वयम्भुवौ स्वयम्भुवः । हे स्वयम्भूः । हे स्वयम्भुवौ । हे स्वयम्भुवः । स्वयम्भुवं स्वयम्भुवौ स्वयम्भुवः । स्वयम्भुवा स्वयम्भूभ्यां स्वयम्भूभिः । स्वयम्भुवे स्वयम्भूभ्यां स्वयम्भूभ्यः । स्वयम्भुवः । स्वयम्भूभ्याम् । स्वयम्भूभ्यः । स्वयम्भुवः स्वयम्भुवोः स्वयम्भुवाम् । स्वयम्भुवि स्वय-

---

**कतीति** । का संख्या येषां ते कति । किंशब्दात् डतिप्रत्ययः । 'शेषा निपात्याः कत्यादयः' इति सिद्धस्य कतिशब्दस्य बहुवचनान्तस्यापि जश्शसो विशेषमाह—**कतिशब्दादिति** ।

इकारान्तानुक्त्वा ईकारान्तानाह **ईकारान्तः पुंलिङ्गः सुश्रीशब्द इति** । श्रिञ् सेवायाम् । सुपूर्वः । क्विप्प्रत्ययः । 'प्रच्छादेर्दीर्घता' इति दीर्घः ।

म्भुवोः स्वयम्भूषु ॥ सेनानीशब्दस्याऽविशेषो हसादौ । स्वरादौ तु विशेषः । सेनानीः । सेनानी औ इति स्थिते ॥ ४७ ॥

## यौ वा । ४८ ।

धातोरवयवसंयोगः पूर्वो यस्मादीकारादूकाराच्च नास्ति तदन्तस्यानेकस्वरस्य कारकाव्ययपूर्वस्यैकस्वरस्य च धातोरीकारस्य ऊकारस्य च यकारवकारौ भवतः स्वरे परे, वर्षाभूपुनर्भूव्यतिरिक्तभूशब्दसुधीशब्दौ वर्जयित्वा । वाग्रहणादियं विवक्षा । सेनान्यौ सेनान्यः । हे सेनानीः हे सेनान्यौ हे सेनान्यः । सेनान्यं सेनान्यौ सेनान्यः । सेनान्या सेनानीभ्यां सेनानीभिः । सेनान्ये सेनानीभ्यां सेनानीभ्यः । सेनान्यः सेनानीभ्यां सेनानीभ्यः । सेनान्यः सेनान्योः ।

---

क्विपः सर्वापहारी लोपः । सुष्ठु श्रयन्त्येनमिति सुश्रीः । 'क्विबन्ता धातुत्वं न जहति शब्दत्वं च प्रतिपद्यन्ते' इति स्यादयः ।

यस्मादीकारादूकाराच्च पूर्वमादौ वर्तमानो धातोरवयवसंयोगः—सुश्रीयवक्रीवत् द्वयक्षरादिसंयोगो नास्ति तदन्तस्य स एव धात्ववयवसंयोगपूर्वकत्वरहित ईकार ऊकारो वा अन्ते यस्य स तदन्तस्तस्य पुनरनेकस्वरस्य द्वयादिद्वित्रिस्वरपूर्वस्य शब्दस्य सम्बन्धिन ईकारस्य यकारः । ऊकारस्य च वकारः ।। ननु 'णीञ् प्रापणे' अयं धातुरेकस्वरः । कथमनेकस्वरत्वम् । उच्यते—कारकपूर्वस्यापि क्विबन्तग्रहणेन ग्रहणादनेकस्वरत्वम् । अत्र वाशब्दो व्यवस्थावाचको न तु विकल्पार्थस्तेन वर्षाभूपुनर्भूहन्भूकारभूकरभू—एभ्योऽतिरिक्तोऽन्यो यो भूशब्दः स्वयम्भू—हन्भू—कमलभू—नाभिभू—अङ्गभू—आत्मभू—मनोभू—प्रभृतिकस्तस्य सम्भवे सत्यपि 'य्वौ वा' इति न भवति । किं तु 'य्वोर्धातोरियुवौ स्वरे' इत्येव भवति । तथा सुधीशब्दस्यापि सम्भवे सत्यपि 'य्वौ वा' इति न भवति । किं तु 'य्वोर्धातोरियुवौ

*** सेनान्यादीनां वाऽऽमो नुट् वक्तव्यः *** । सेनान्यां सेनानीनाम् । सेनानी ङि इति स्थिते ॥ ४८ ॥

## आम् ङेर्नियश्च । ४९ ।

आबन्तादीबन्तनीशब्दाच्चोत्तरस्य ङेरामादेशो भवति । सेनान्यां सेनान्योः सेनानीषु । वातप्रमीशब्दस्य भेदः । वातप्रमीः वातप्रम्यौ वातप्रम्यः । हे वातप्रमीः हे वातप्रम्यौ हे वातप्रम्यः । वातप्रमीं वातप्रम्यौ वातप्रमीन् । वातप्रम्या वातप्रमीभ्याम् वातप्रमीभिः । वातप्रम्ये वातप्रमीभ्यां वातप्रमीभ्यः । वातप्रम्यः वातप्रमीभ्यां वातप्रमीभ्यः । वातप्रम्यः वातप्रम्योः । आमि नुट्—वातप्रमीनाम् । ङौ तु सवर्णदीर्घः । वातप्रमी वातप्रम्योः वातप्रमीषु । एवं ग्रामणीप्रभृतयः सेनानीवत् । एवमूकारान्ताश्च यवल्वप्रभृतयः ।

---

स्वरे' इत्येव भवति । अत एतौ वर्जयित्वा अपर ईकारोकारयोः पूर्वोक्तलक्षणयोर्यकारवकारौ भवतः । वाग्रहणादियं विवक्षा ज्ञेया । कुतः ? । निपातानामनेकार्थत्वात् । धातोः संयोगपूर्वकत्वे सुश्रियौ यवक्रियौ कटप्रुवौ इत्यादौ न यकारवकारौ । किं तु इयुवावेव । एकस्वरे तु—नीः नियौ । धीः धियौ । लूः लुवौ । भूः भुवौ भुवः—इत्यादौ न यकारवकारौ । बहुव्रीहिसमासे अनेकस्वरस्यापि इयुवौ भवतः। यथा—सुधीः सुधियौ सुधियः। परमधिय इत्यादि । धात्ववयवसंयोगपूर्वकत्वे एव यकारवकारौ न भवतः । तेन उन्नीः उन्न्यौ उन्न्यः—इत्यादौ स्वाभाविकधात्ववयवसंयोगपूर्वकत्वाभावात् यत्वं न भवति । वर्षाभू—पुनर्भू—दृन्भू—कारभूशब्दानां भूशब्दस्य वत्वम् । अन्यत्र च उवेव । वाशब्दस्य व्यवस्थावाचकत्वाच्च इयं विवक्षा लभ्यते ।

ऊकारान्ता हि यवलूखलपूदृन्भूकरभूकारभूवर्षाभूपुनर्भूप्रभृतयोऽप्येवम् ।

ऋकारान्तः पुँल्लिङ्गः पितृशब्दः ॥ ४९ ॥

## सेरा । ५० ।

ऋकारान्तात्परस्य सेरा भवति, स च डित् । डित्वाट्टेर्लोपः । पिता ॥ ५० ॥

## अर् पञ्चसु । ५१ ।

ऋकारस्याऽर्भवति पञ्चसु स्यादिषु परेषु स च डित् । पितरौ पितरः ॥ ५१ ॥

## धेरर् । ५२ ।

ऋकारान्तात्परस्य धेरर् भवति स च डित् । हे पितः हे पितरौ हे पितरः । पितरं पितरौ पितॄन् । पित्रा पितृभ्यां पितृभिः । पित्रे पितृभ्यां पितृभ्यः । पितुः पितृभ्यां पितृभ्यः । पितुः पित्रोः पितॄणाम् ॥ ५२ ॥

## ङौ । ५३ ।

ऋकारस्याऽर्भवति ङौ परे । पितरि पित्रोः पितृषु । एवं जामातृभ्रात्रादयः । एवं नृशब्दः ।

---

परं सप्तम्येकवचने नीशब्दाभावात् ङेराम् न भवति । तेन यवल्वि पुनर्भ्वि वर्षाभ्वि इति रूपम् । वर्षासु भवतीति वर्षाभूर्मण्डूकः । यवान् लुनातीति यवलूः कृषीवलः । एते क्विप्प्रत्ययान्ताः ।

एवम् ऊकारान्तो हूहूशब्दो गन्धर्वविशेषवाचकः ।

पा रक्षणे । पाति रक्षतीति पिता । पितृशब्दो निपातसिद्धो न तृप्रत्ययान्तः ।

**एवमिति** । नृशब्दोऽपि पितृशब्दवत् ।

ना नरौ नरः। नरं नरौ नॄन्। न्रा नृभ्यां नृभिः। न्रे नृभ्यां नृभ्यः। नुः नृभ्यां नृभ्यः। नुः न्रोः॥ ५३॥

## नुर्वा नामि दीर्घः। ५४।

नृशब्दस्य नामि परे वा दीर्घो भवति। नॄणाम् नृणाम्। नरि न्रोः नृषु। हे नः हे नरौ हे नरः। कर्तृशब्दस्य पञ्चसु विशेषः॥ ५४॥

## स्तुरार्। ५५।

सकारतृप्रत्ययसम्बन्धिन ऋकारस्याऽऽर्भवति पञ्चसु परेषु। कर्त्तार् सि इति स्थिते। यदादेशस्तद्वद्भवति। 'सेरा'। डित्वाट्टेर्लोपः। कर्ता कर्तारौ कर्तारः। हे कर्तः हे कर्तारौ हे कर्तारः। कर्तारं कर्तारौ कर्तॄन्। कर्त्रा कर्तृभ्यां कर्तृभिः। कर्त्रे कर्तृभ्यां कर्तृभ्यः। कर्तुः कर्तृभ्यां कर्तृभ्यः। कर्तुः कर्त्रोः कर्तॄणाम्। कर्तरि कर्त्रोः कर्तृषु। एवं नप्तृहोतृशास्तृप्रभृतयः॥ उकारान्तस्य क्रोष्टुशब्दस्य भेदः। ***उकारान्तस्यापि क्रोष्टुशब्दस्य पञ्चस्वघिषु तृप्रत्ययान्तस्येव रूपं वक्तव्यम्***। क्रोष्टा क्रोष्टारौ क्रोष्टारः। क्रोष्टारं क्रोष्टारौ। शसि तृप्रत्ययवद्भावाऽभावात्। क्रोष्टून्। ***तृतीयादौ तृप्रत्ययान्तता वा वक्तव्या***। क्रोष्ट्रा, क्रोष्टुना। क्रोष्टुभ्यां

---

आमि तु विशेषमाह—**नुरिति**।

क्रुश् आह्वाने। तुन्प्रत्ययः। 'गुणः' 'छशषराजादेः षः' 'ष्टुभिः ष्टुः' 'क्रोष्टु' इति जातम्।

क्रोष्टुभिः । क्रोष्ट्रे, क्रोष्टवे । क्रोष्टुभ्यां क्रोष्टुभ्यः । क्रोष्टुः, क्रोष्टोः । क्रोष्टुभ्यां क्रोष्टुभ्यः । क्रोष्टुः—क्रोष्टोः । क्रोष्ट्रोः—क्रोष्ट्वोः । क्रोष्टूनाम् । नुडागमे कृते हसादित्वात्तृज्वद्भावो नास्ति । **कृताऽकृतप्रसङ्गो यो विधिः स नित्यः । नित्याऽनित्ययोर्मध्ये नित्यविधिर्बलवान्** । क्रोष्टरि-क्रोष्टौ । क्रोष्टोः । क्रोष्ट्वोः । क्रोष्टुषु।

ऋकारान्ता ऌकारान्ता एकारान्ताश्चाऽप्रसिद्धाः । ऐकारान्तः पुँल्लिङ्गः सुरैशब्दः ॥ ५५ ॥

## रै [1]स्भि । ५६ ।

रैशब्दस्याऽऽकारादेशो भवति सकारभकारादौ विभक्तौ परतः । सुराः । स्वरादौ सर्वत्राऽऽयादेशः । सुरायौ सुरायः । हे सुराः हे सुरायौ हे सुरायः । सुरायं सुरायौ सुरायः । सुराया सुराभ्यां सुराभिः । इत्यादि । ओकारान्तः पुँल्लिङ्गो गोशब्दः ॥५६॥

---

१ रै षष्ठ्येकवचनान्तम् । स्च भ्च रभ्, तस्मिन् स्भि-सप्तम्येकवचनान्तम् । रैशब्दस्य विभक्तिसम्बन्धिनि सकारे भकारे च परे आकारो भवति । षष्ठीनिर्दिष्टस्येत्यन्तस्येत्यववेयम् ।

२ शोभनो राः—सुराः । शोभनो राः-धनं यस्यासौ वा सुराः । राः-धनम् ।

३ ओकारान्तः—पुलिङ्गो गोशब्दः । दशार्थवाचकः । यतः—'दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु । भूमौ पशौ च गोशब्दो विद्वद्भिर्दशधा मतः' । दशस्वप्यर्थेषु गोशब्दः पुंस्त्रीलिङ्गे ज्ञेयः—इति हेमाचार्या आहुः । व्याडिरप्येवमाह । गौडस्तु—'स्वर्गे रश्मौ च वज्रे च बलीवर्दे च गौः पुमान् । स्त्री सौरभेयीदिग्बाणदृग्वाग्भूप्वप्सु भूम्नि च' ॥ इति विशेषमाह ।

## ओरौ । ५७ ।

ओकारस्यौकारादेशो भवति पञ्चसु परेषु । गौः गावौ गावः । हे गौः हे गावौ हे गावः ॥ ५७ ॥

## आऽम्शसि । ५८ ।

ओकारस्याऽऽत्वं भवति अमि शसि च परे । गां गावौ गाः । गवा गोभ्यां गोभिः । गवे गोभ्यां गोभ्यः । 'ङस्ये'त्यकारलोपः । गोः गोभ्यां गोभ्यः । गोः गवोः गवाम् ॥ ५८ ॥

## श्रुतौ गोरामः । ५९ ।

श्रुतौ गोशब्दात्परस्यामो नुडागमो भवति । गोनाम् । गवि गवोः गोषु । एवं सुद्योशब्दः । औकारान्तः पुँल्लिङ्गो ग्लौशब्द[1]स्तस्य हसादावविशेषः, स्वरादावावादेशः । ग्लौः ग्लावौ ग्लावः । ग्लावं ग्लावौ ग्लावः । ग्लावा ग्लौभ्यामित्यादि ॥ ५९ ॥

इति स्वरान्ताः पुँल्लिङ्गाः ।

---

१ औकारान्तः पुंलिङ्गो ग्लौशब्दश्चन्द्रार्थः । ग्लै हर्षक्षये । ग्लायति कृष्णपक्षे इति ग्लौः । औणादिको डौप्रत्ययः । 'डिति टेः' इति टिलोपे च ग्लौरिति जातम् ।

इति चन्द्रकीर्त्तिसङ्क्षिप्तसारभूतायां सरलायां स्वरान्तपुंलिङ्गप्रकरणम् ।



# अथ स्वरान्ताः स्त्रीलिंगाः प्रदर्श्यन्ते ।

तत्राऽऽबन्तो गङ्गाशब्दः ।

**आबन्तः स्त्रियाम् । १ ।**

अकारान्तान्नाम्नः स्त्रियां वर्तमानादाप्प्रत्ययो भवति ॥ १ ॥

**आपः । २ ।**

आबन्तात्परस्य सेर्लोपो भवति । गङ्गा ॥ २ ॥

**औरी । ३ ।**

आबन्तात्पर औ इकारमापद्यते । "अ इ ए" । गङ्गे गङ्गाः ॥३॥

**धिरिः[1] । ४ ।**

आबन्तात्परो धिरिर्भवति । हे गङ्गे हे गङ्गे हे गङ्गाः ॥ ४ ॥

**अम्बादीनां धौ ह्रस्वः । ५ ।**

अम्बादीनां धौ परे ह्रस्वो भवति । हे अम्ब । हे अक्क । हे अल्ल[2] । *असंयुक्तानां डलकवतां प्रतिषेधो वाच्यः* । हे अम्बाडे । हे अम्बाले । हे अम्बिके इत्यादौ ह्रस्वो न भवति । गङ्गां गङ्गे । पुंस इति विशेषणात् स्त्रियां शसि सकारस्य

१ धिः प्रथमैकवचनान्तम् । इः प्रथमैकवचनान्तम् । केचित्तु-'धिरी' इति दीर्घमीकारं पठन्ति । ततः 'औ' इत्यस्मिन् सूत्रे दीर्घकारानुवृत्तिं गृह्णन्ति ततो 'जरसी' इति रूपं साधयन्ति ।

२ अत्र अक्कादिशब्दानां हे अक्क हे अल्ल हे अम्बेति रूपाणि । एते त्रय एकार्था गृहमध्यस्थवृद्धस्त्रीवाचकाः । अम्बादीनां द्विस्वराणामेव धौ ह्रस्वता । तेन हे अम्बाले हे अम्बिके इत्यादौ न ह्रस्वः ।

नकारो न भवति । गङ्गाः ॥ ५ ॥

टौसोरे । ६ ।

आबन्तस्य टौसोः परयोरेत्वं भवति । अयादेशः । गङ्गया गङ्गाभ्यां गङ्गाभिः ॥ ६ ॥

ङितो यट् । ७ ।

आबन्तात्परेषां ङे, ङसि, ङस्, ङि इत्येतेषां यडागमो भवति । एकारः स्थाननियमार्थः । गङ्गायै गङ्गाभ्यां गङ्गाभ्यः । गङ्गायाः गङ्गाभ्यां गङ्गाभ्यः । गङ्गायाः गङ्गयोः । ***आबन्तादीबन्तादामो नुट् वक्तव्यः*** । गङ्गानाम् । 'आम् ङेः' इत्याम् । गङ्गायां गङ्गयोः गङ्गासु । एवं श्रद्धामेधाशालामालाहेलादोलाप्रभृतयः । सर्वा[1] सर्वे सर्वाः । हे सर्वे । सर्वां सर्वे सर्वाः । सर्वया सर्वाभ्यां सर्वाभिः । सर्वादीनां ङित्सु विशेषः ॥७॥

---

१ सर्वाशब्दवदेव आबन्ताः सर्वादयोऽन्येऽपि विश्वा, उभा, अन्या, अन्यतरा, इतरा, कतरा, कतमा, समा, सिमा, नेमा, एका, पूर्वा परा, दक्षिणा, उत्तरा, अपरा, अधरा, स्वा, अन्तरा शब्दा ज्ञेयाः । उभयशब्दस्य तु ईप्प्रत्ययः उभयी उभय्यौ उभय्यः । नदीवत् । द्वितीयातृतीयाशब्दयोर्ङित्सु वा सर्वादित्वम् । द्वितीयस्यै द्वितीयायै द्वितीयस्याः द्वितीयायाः । द्वितीयस्यां द्वितीयायाम् । तृतीयस्यै तृतीयायै तृतीयस्याः, तृतीयायाः तृतीयस्यां तृतीयायामित्यप्यवधेयम् ।

सोमपाक्षीरपादयस्त्वाप्प्रत्ययान्ता न, किन्तु आकारान्ताः क्विबन्तास्तेषां साधना रूपाणि च पुंलिङ्गवत् ।

द्विशब्दस्य—द्वे द्वे द्वाभ्यां द्वाभ्यां द्वाभ्यां द्वयोः द्वयोः । एवम् उभे उभे ।

## यटोऽच्च । ८ ।

आबन्तात्सर्वादेः परस्य यटः सुडागमो भवति पूर्वस्य चापोऽकारो भवति । सर्वस्यै सर्वाभ्यां सर्वाभ्यः । सर्वस्याः सर्वाभ्यां सर्वाभ्यः । सर्वस्याः सर्वयोः सर्वासाम् । सर्वस्यां सर्वयोः सर्वासु । आकारान्तो जराशब्दः । ***जराया: स्वरादौ जरस् वा वक्तव्यः*** । जरा, जरसौ जरे, जरसः जराः । जरसं जरां, जरसौ जरे, जरसः जराः । जरसा जरया, जराभ्यां जराभिः । जरसे जरायै, जराभ्यां जराभ्यः । जरसः जरायाः, जराभ्यां जराभ्यः । जरसः जरायाः, जरसोः जरयोः, जरसां जराणाम् । जरसि जरायां, जरसोः जरयोः, जरासु । हे जरे हे जरसौ हे जरे हे जरसः हे जराः । इकारान्तः स्त्रीलिङ्गो बुद्धिशब्दः । तस्य च प्रथमाद्वितीययोः हरिशब्दवत् प्रक्रिया । बुद्धिः बुद्धी बुद्धयः । बुद्धिं बुद्धी बुद्धीः । स्त्रीत्वाच्छसो नत्वाऽभावः । बुद्धया बुद्धिभ्यां बुद्धिभिः ॥ ८ ॥

## इदुद्भ्याम् । ९ ।

स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङितां वचनानां वा अडागमो भवति । बुद्ध्यै बुद्धये, बुद्धिभ्यां बुद्धिभ्यः । बुद्धयाः बुद्धेः, बुद्धिभ्यां बुद्धिभ्यः । बुद्ध्याः बुद्धेः, बुद्धयोः, बुद्धीनाम् ॥ ९ ॥

## स्त्रियां य्वोः । १० ।

इश्च उश्च यू तस्मादिवर्णान्तादुवर्णान्ताच्च परस्य ङेरामादेशो

भवति । बुद्ध्याम् । अडागमाभाव आमोऽप्यभावः । बुद्धौ बुद्ध्योः बुद्धिषु । एवं मतिभूतिविभूतिधृतिरुचिकृतिसिद्धि-शान्तिक्षान्तिभ्रान्त्यालिशक्तिप्रभृतयः । एवं धेनुतनुरज्जुप्रभृतयः स्त्रीलिङ्गा उकारान्ता एतैरेव सूत्रैः सिद्ध्यन्ति । धेनुः[1] धेनू धेनवः । हे धेनो हे धेनू हे धेनवः । धेनुं धेनू धेनूः । धेन्वा धेनुभ्यां धेनुभिः । धेन्वै धेनवे, धेनुभ्यां धेनुभ्यः । धेन्वाः धेनोः, धेनुभ्यां धनुभ्यः । धेन्वाः धेनोः, धेन्वोः धेनूनाम् । धेन्वां धेनौ, धेन्वोः धेनुषु । ईकारान्तः स्त्रीलिङ्गो नदीशब्दः ॥ १० ॥

## हसेपः सेर्लोपः । ११ ।

हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति । नदी नद्यौ नद्यः ॥

## धौ ह्रस्वः । १२ ।

इवर्णोवर्णयोरधातोः स्त्रियां धौ परे ह्रस्वो भवति । हे नदि[2] हे नद्यौ हे नद्यः । नदीं नद्यौ नदीः । नद्या नदीभ्यां नदीभिः ॥

---

१ धेनुः । धेनू । धेनवः । धेनुम् । धेनू । धेनूः । स्त्रीलिङ्गत्वान्नत्वा-भावः । धेन्वा । धेनुभ्याम् । धेनुभिः । धेन्वै—धेनवे । धेनुभ्याम् । धेनुभ्यः । धेन्वाः धेनोः । धेनुभ्याम् । धेनुभ्यः । धेन्वाः—धेनोः । धेन्वोः । धेनूनाम् । धेन्वाम्—धेनौ । धेन्वोः । धेनुषु । हे धेनो । हे धेनू । हे धेनवः ।

२ ह्रस्वविधिसामर्थ्यान्न गुणः ॥ एवं गौरीसरस्वतीब्रह्माणीकुमारी-नारीसुन्दरीरमणीप्रभृतयः ।

## ङिन्तामट् । १३ ।

स्त्रियामीकारान्तादूकारान्ताच्च परेषां ङितां वचनानामडागमो भवति । नद्यै नदीभ्यां नदीभ्यः । नद्याः नदीभ्यां नदीभ्यः । नद्याः नद्योः नदीनाम् । नद्यां नद्योः नदीषु । एवं गौरीसरस्वतीब्राह्मणी-कुमारीकिशोरीकलभीपार्वतीभवानीप्रभृतयः । लक्ष्मीशब्दस्येबन्तत्वा-भावात् सलोपो नास्ति । लक्ष्मीः[1] लक्ष्म्यौ लक्ष्म्यः । हे लक्ष्मि । शेषं नदीवत् । स्त्रीशब्दस्य ईबन्तत्वात्सेर्लोपोऽस्ति । स्त्री ॥ १३ ॥

## स्त्रीभ्रुवोः । १४ ।

स्त्रीशब्दस्य भ्रूशब्दस्य च इयुवौ भवतः स्वरे परे । स्त्रियौ स्त्रियः । हे स्त्रि हे स्त्रियौ हे स्त्रियः ॥ १४ ॥

## वाऽम्शसि । १५ ।

स्त्रीशब्दस्य अमि शसि च परे वा इयादेशो भवति । स्त्रियं स्त्रीम् । स्त्रियौ । स्त्रियः—स्त्रीः । स्त्रिया स्त्रीभ्यां स्त्रीभिः । स्त्रीषु । शेषं नदीवत् । श्रीः[1] श्रियौ श्रियः । हे श्रीः । श्रियं श्रियौ श्रियः । श्रिया श्रीभ्यां श्रीभिः ॥ १५ ॥

## वेयुवः । १६ ।

---

१ 'अवी लक्ष्मी तरी तन्त्री तन्द्री धी ह्री श्रियां पुरः ।
भीशब्दाच्च न सेर्लोपः स्त्रीलिङ्गे स्यात्कदाचन' ॥ इति ।

इयुवन्तात् स्त्रियां वर्तमानात् ङितां वचनानां वाऽडागमो भवति । स्त्रियास्तु नित्यम् । श्रियै श्रिये श्रीभ्यां श्रीभ्यः । श्रियाः श्रियः । श्रीभ्यां श्रीभ्यः । श्रियाः श्रियः । श्रियोः । **श्र्यादीनां वामो नुड् वक्तव्यः*** । श्रियां श्रीणाम् । ङौ परेऽडागमाऽभावे आमोऽप्यभावः । श्रियां श्रियि । श्रियोः श्रीषु । एवं धीह्रीप्रभृतयोऽप्यनीवन्ताः । एवं भूशब्दो भ्रूशब्दश्च । वधू-करभोरू-कच्छू-कण्डू-जम्ब्वादीनां नदीशब्दवत् रूपं ज्ञेयम् । वधूः वध्वौ वध्वः । हे वधु । वधूं वध्वौ वधूः । जम्बूः जम्ब्वौ जम्ब्वः । हे जम्बु हे जम्ब्वौ हे जम्ब्वः । ऋकारान्तो मातृशब्दः । माता मातरौ मातरः । मातरं मातरौ मातॄः । 'शसि' इति दीर्घत्वम् । शेषं पितृवत् । स्वसृशब्दः कर्तृवत् । नत्वाऽभावो विशेषः । रैशब्दः सुरैशब्दवत् । नौशब्दो ग्लौशब्दवत् । गोशब्दस्तु पूर्ववत् ॥ १६ ॥

इति स्वरान्तास्त्रीलिङ्गाः ।

---

१ भ्रूः भ्रुवौ भ्रुवः भ्रुवं भ्रुवौ भ्रुवः । भ्रुवा भ्रूभ्यां भ्रूभिः । इत्यादि ।

२ एवं चमू—तनू—जम्बू—कण्डू—कच्छू—यवागू—दिधीषू—कद्रू—चञ्चू—कर्कन्धू—करभोरू—प्रभृतयः ।

३ एवं पितृष्वसृमातृष्वसृशब्दौ ।

इति स्वरान्तस्त्रीलिङ्गसाधनम् ।

# अथ स्वरान्ता नपुंसकलिंगाः प्रदर्श्यन्ते ।

अकारान्तो नपुंसकलिङ्गः कुलशब्दः[1] । तस्य प्रथमाद्वितीयैकवचने-

**अतोऽम् । १ ।**

अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोरम् भवति अधौ । अमो-ग्रहणं लुग्व्यावृत्त्यर्थम् । "अमूशसोरस्य" इत्यकारलोपः । कुलम् ॥ १ ॥

**ईमौ । २ ।**

नपुंसकलिङ्गात्पर औ ईकारमापद्यते । कुले ॥ २ ॥

**जश्शसोः शिः । ३ ।**

नपुंसकलिङ्गात्परयोर्जश्शसोः शिर्भवति । शकारः सर्वादेशार्थः । ***गुरुः शिच्च सर्वस्य वक्तव्यः*** ॥ ३[2] ॥

**नुमयमः । ४ ।**

नपुंसकस्य नुमागमो भवति शौ परे । यमप्रत्याहारान्तस्य न भवति । ***मिदन्त्यात्स्वरात्परो वक्तव्यः*** ॥ ४ ॥

---

१ एवं मूलफलपत्रपुष्पकुण्डकुटुम्बज्ञानधनवनरत्नादयः शब्दाः ।

२ शिरिति शकारः सर्वादेशार्थः । तेन सर्वस्य जसः शसश्च इर्भवति न त्वन्तस्य । तमेवाह—**गुरुः शिच्चेति** । शकार इद्यस्य स शित्—आदेशः । गुरुः शिच्च सर्वस्य वक्तव्यः । गुरुरनेकाक्षरः 'भरेयङ्' इत्यादिकः । तथा शकारेच्च य आदेशः स सर्वस्यादेशिनः स्थाने भवति न त्वन्तस्य ।

**नोपधायाः । ५ ।**

नान्तस्योपधाया दीर्घो भवति शौ परे धिवर्जितेषु पञ्चसु नामि च । कुलानि । हे कुल हे कुले हे कुलानि । पुनरपि कुलं कुले कुलानि । शेषं देववत् । एवं मलफलपत्रपुष्पकुण्डलकुटुम्बादयः । सर्वादीनां यकारान्तानामन्यादिपञ्चशब्दव्यतिरिक्तानां प्रथमाद्वितीययोः कुलशब्दवत्प्रक्रिया । सर्वं सर्वे सर्वाणि । शेषं पूर्ववत् । अन्यादेर्विशेषमाह ॥ ५ ॥

**स्त्वन्यादेः । ६ ।**

अन्यादेर्गणात्परयोः स्यमोः स्तुर्भवति । शकारः शित्कार्यार्थः । उकार उच्चारणार्थः ॥ ६ ॥

**वाऽवसाने । ७ ।**

अवसाने वर्तमानानां शसानां जबा भवन्ति चपा वा । अन्यत् अन्यद् अन्ये अन्यानि । पुनरपि—अन्यत् अन्यद् अन्ये अन्यानि । अन्यतरत् अन्यतरद् अन्यतरे अन्यतराणि २ । इतरत् इतरद् इतरे इतराणि २ । कतरत् कतरद् कतरे कतराणि २ । कतमत् कतमद् कतमे कतमानि २ । शेषं सर्वशब्दवत् । एते ह्यन्यादयः । इकारान्तोऽस्थिशब्दः ॥ ७ ॥

**नपुंसकात्स्यमोर्लुक् । ८ ।**

नपुंसकलिङ्गात्परयोः स्यमोर्लुग्भवति । अस्थि ॥ ८ ॥

**स्वृणां[1] नपुंसके धौ वा गुणो वक्तव्यः । ९ ।**

१ धौ विशेषमाह—'स्वृणां ( धौ गुणं वा' ) । इश्च उश्च ऋश्च स्वरः तेषां स्वृणाम् । इकारउकारऋकाराणां स्थाने नपुंसकलिङ्गविषये धौ वा गुणो वक्तव्यः । 'नपुंसकात्स्यमोर्लुक्' इति धिलोपे विहिते इकारस्य एकारो गुणः ।

इश्च उश्च ऋश्च य्वः । तेषां य्वृणाम् । हे अस्थि हे अस्थे हे अस्थिनी हे अस्थीनि । उक्तं हि—

**'सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् । माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ॥**

**नामिनः स्वरे । १० ।**

नाम्यन्तस्य नपुंसकलिङ्गस्य नुमागमो भवति स्वरे परे । "इमौ" । अस्थिनी अस्थीनि २ ॥ १० ॥

**अच्चास्थ्नां टादौ । ११ ।**

अस्थ्यादीनां नुमागमो भवति, इकारस्य चाकारो भवति टादौ स्वरे परे ॥ ११ ॥

---

हेशब्दस्य प्राक्प्रयोगः ।

१ अत्र 'य्वृणा'मित्येव सूत्रम्, 'नपुंसके ऽवां वा गुणो वक्तव्य'इति तु वार्त्तिकमित्यन्ये मन्यन्ते । अत्र सम्प्रदायविदः प्रमाणम् ।

२ अत्र शिष्टसंमतिमाह—**उक्तं हीति** । वृद्धैरिति शेषः । सम्बोधने इति । 'तु' इत्यवधारणे । माध्यंदिनिराचार्यः उशनसः उशनसूशब्दस्य संबोधने आमन्त्रणे त्रिरूपं रूपत्रयं वष्टि अभिलषति वाञ्छति कथयति वा । किं तत् त्रिरूपं ? । सान्तं सकारान्तं । यथा उशनस् । 'हे उशनः' । तथा नान्तं नकारान्तम् 'हे उशनन्' । तथा अदन्तमकारान्तं 'हे उशन' इति । तु पुनः इगन्ते इकारोकारऋकारान्ते नपुंसके धिविषये विकल्पेन गुणं कथयति । यतः प्रक्रिया कौमुद्याम्—इउण् ऋलृक् एते इक्संज्ञकाः । यथा हे अस्थि हे अस्थे । हे वारि हे वारे । हे मधो हे मधु । हे कर्तृ हे कर्तः । कथंभूतो माध्यन्दिनिः ? । व्याघ्रपदां व्याघ्रपदगोत्रीयविप्राणां मध्ये वरिष्ठो गरिष्ठः श्रेष्ठः ।

३ 'असादा'विति केचित्पठन्ति ।

## अल्लोपः स्वरेऽम्वयुक्तात्[1] छसादौ । १२ ।

नान्तस्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे, मकारवकारान्तसंयोगादुत्तरस्य न भवति । अस्थ्ना अस्थिभ्याम् अस्थिभिः । अस्थ्ने अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थ्नोः अस्थ्नाम् ॥ १२ ॥

## वेङ्योः । १३ ।

नान्तस्य नाम्न उपधाया ईङयोः परयोर्वा अकारस्य लोपो भवति । अस्थ्नि-अस्थनि अस्थ्नोः अस्थिषु । एवं दधि-सक्थि-अक्षि-शब्दाः । दध्ना दधिभ्याम् दधिभिः । सक्थि सक्थिनी सक्थीनि २ । सक्थ्ना सक्थिभ्यां सक्थिभिः । अक्ष्णा अक्षिभ्याम् अक्षिभिः । वारि वारिणी वारीणि । इति पूर्ववत् प्रक्रिया ॥ १३ ॥

## नपुंसकस्य ह्रस्वः । १४ ।

नपुंसकस्य ह्रस्वो भवति । 'नपुंसकात् स्यमोर्लुक्' । ग्रामणि । "नामिनः स्वरे" इति नुम् । "इमौ" । ग्रामणिनी ग्रामणीनि २ । हे ग्रामणे हे ग्रामणि, हे ग्रामणिनी हे ग्रामणीनि । "नामिनः स्वरे" । "नोपधायाः" इति दीर्घः ॥ १४ ॥

## टादावुक्तपुंस्कं[2] पुंवद्वा । १५ ।

---

१ मश्च वश्च म्वौ, ताभ्यां युक्तः संयोगः म्वयुक्तः, न म्वयुक्तः अम्वयुक्तः, तस्मात् अम्वयुक्तात् ।

२ उक्तः पुमान् पुंलिङ्गो येन तदुक्तपुंस्कम् । अर्थरूपाभ्यां तुल्याकारो यः शब्दः पुंसि नपुंसके वर्तमानः स उक्तपुंस्कः । तथावस्थितमपि निर्दिष्टपुंलिङ्गमेवंभूतं नाम्यन्तं नपुंसकं टादौ स्वरादौ विभक्तौ परतः पुंवद्वा भवति- नपुंसकलिङ्गे वा पुंलिङ्गवत्स्यादित्यर्थः । अनेन तृतीयादौ वा ह्रस्वः ।

उक्तपुंस्कं नाम्यन्तं नपुंसकलिङ्गं टादौ स्वरे परे पुंवद्वा भवति । "नामिनः स्वरे" । ग्रामण्या ग्रामणिना । ग्रामणिभ्यां ग्रामणिभिः । ग्रामण्ये ग्रामणिने । ग्रामणिभ्यां ग्रामणिभ्यः । ग्रामण्यः ग्रामणिनः । ग्रामणिभ्यां ग्रामणिभ्यः । ग्रामण्यः ग्रामणिनः । ग्रामण्योः ग्रामणिनोः । ग्रामण्याम् । 'नुमन्तस्यामि दीर्घः' । 'नामिनः स्वरे' । ग्रामणीनाम् । 'आम् ङेः' ग्रामण्या ग्रामणिनि ग्रामण्योः ग्रामणिनोः ग्रामणिषु ।

'अतो म्' । सोमपं सोमपे सोमपानि २ । सोमपेन सोमपाभ्यां सोमपैः । सोमपाय सोमपाभ्यां सोमपाभ्यः । इति पूर्ववत् । उकारान्तो मधुशब्दः । "नपुंसकात्स्यमोर्लुक्" । मधु । "नामिनः स्वरे" इति नुमागमः । मधुनी । "जश्शसोः शिः" । "नोपधायाः" इति दीर्घः । मधूनि । पुनरपि—मधु

१ उक्तञ्च—

**एक एव हि यः शब्दस्त्रिषु लिङ्गेषु वर्त्तते ।**
**एकमेवार्थमाख्याति उक्तपुंस्कं तदुच्यते ॥ इति ॥**

२ मधुशब्दश्च चैत्रमासवाची वसन्तवाची मधुदैत्यवाची च पुंलिङ्गे भवति । क्षौद्रमद्यमकरन्दवाची तु नपुंसकलिङ्गे भवति । अत एवार्थभेदादुक्तपुंस्त्वं न, किंतु तस्य वारिशब्दवत्साधना ॥ एवम् उकारान्तो वस्तुशब्दः । वस्तु वस्तुनी वस्तूनि । एवं वास्तु वास्तुनी वास्तूनि । अम्बु अम्बुनी अम्बूनि । सानु सानुनी सानूनि । इत्यादि ॥

मधुनी मधूनि । "नामिनः स्वरे" । मधुना मधुभ्यां मधुभिः । पीलु पीलुनी पीलूनि २ । पीलुने । ऋकारान्तः कर्तृशब्दः । 'नपुंसकात् स्यमोर्लुक्' । कर्तृ । "नामिनः स्वरे" 'ष्कुर्नो णोऽनन्ते' । कर्तृणी कर्तॄणि १। 'ऋ रम्' । कर्त्रा कर्तृणा कर्तृभ्यां कर्तृभिः । कर्त्रे कर्तृणे कर्तृभ्यां कर्तृभ्यः । 'ऋतो ङ उः' । स च डित् । 'डिति टेः' । कर्तुः कर्तृणः । कर्तृभ्यां कर्तृभ्यः । कर्तुः कर्तृणः । कर्त्रोः कर्तृणोः । कर्तॄणाम् । कर्तरि । कर्तृणि । कर्त्रोः कर्तृणोः । कर्तृषु । हे कर्त्तः हे कर्तृ हे कर्तृणी हे कर्तॄणि । ऐकारान्तः अतिरैशब्दः । रायमतिक्रान्तमतिरि कुलम् । ओकारान्त उपगु-शब्दः । उपगता गावो यस्य तदुपगु उपगुनी उपगूनि २ । नावमतिक्रान्तमतिनु जलम् । अतिनुनी अतिनूनि २ ॥ १५ ॥

### इति स्वरान्ता नपुंसकलिङ्गाः ।

---

१ "ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ च वक्तव्यौ" इति वार्त्तिकमत्र प्रवर्त्तते ।

एवमैकारान्तः सुरैशब्दः । 'नपुंसकस्य' इति ह्रस्वे कृते वारिशब्दवत् । ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ वक्तव्यौ । सुष्ठु राः धनं यस्य तत् सुरि सुरिणी । सुरीणि । सुरिणा सुराया सुराभ्यां सुराभिः—इत्यादि । एवं सुष्ठु नौर्यस्य तत् सुनु सुनुनी सुनूनि । सुनुना सुनावा, सुनुने सुनावे इत्यादि ।

# अथ हसान्ताःपुल्लिंगाः प्रदर्श्यन्ते ।

तत्र हकारान्तः पुँल्लिङ्गोऽनडुह्शब्दः[1] । नामसंज्ञायां स्यादयः ।

***पञ्चस्वनडुह आमागमो वक्तव्यः***

**'सावनडुहः । १ ।**

अनुडुह्शब्दस्य सौ परे नुमागमो भवति ॥ १ ॥

**संयोगान्तस्य लोपः । २ ।**

संयोगान्तस्य लोपो भवति रसे पदान्ते च । रेफादुत्तरस्य सकारस्यैव लोपो नान्यस्य ॥ २ ॥

**हसेपः सेर्लोपः । ३ ।**

हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति । "उ वम्" इति वत्वम् । लोपविधिसामर्थ्यान्न दत्वम् । अनड्वान् अनड्वाहौ अनड्वाहः । अनड्वाहम् अनड्वाहौ अनडुहः । अनडुहा ॥ ३ ॥

**वसां रसे । ४ ।**

वसु, स्रंसु, ध्वंसु, भ्रंसु, अनडुह्—इत्येतेषां रसे पदान्ते च दत्वं भवति । अनडुद्भ्याम् अनडुद्भिः । अनडुहे अनडुद्भ्याम्

---

१ हकारान्तोऽनडुह्शब्दः । तस्य नामसंज्ञायां सत्यां स्यादयो विभक्तयो भवन्ति । ततः—'पञ्चस्वनडुह आमागमो वक्तव्यः शौ च' ॥ अनडुह्शब्दस्य स्यादिषु पञ्चसु वचनेषु आमागमो भवति ॥ केचित्तु 'अनडुहश्च' इति सूत्रेण 'चतुरनडुहोराम् शौ च' इति सूत्रेण वा आमागममिच्छन्ति । स्त्रीलिङ्गे च विकल्पेनामागमिच्छन्ति-अनड्वाही अनडुही इति ॥ अनेन पञ्चसु आम् ॥ 'मिदन्त्यात्स्वरात्परो वक्तव्यः' इति—डु अग्रे—आ ।

अनडुद्भ्यः । अनडुहः अनडुद्भ्याम् अनडुद्भ्यः । अनडुहः । अनडुहोः अनडुहाम् । अनडुहि अनडुहोः । 'खसे चपा झसानाम्" । अनडुत्सु ॥ ४ ॥

## द्यावम् । ५ ।

अनडुह्शब्दस्य धौ परे अमागमो भवति । "सावनडुहः" "उ वम्" । स्वरहीनं परेण संयोज्यम् । हे अनड्वन् हे अनड्वाहौ हे अनड्वाहः—इत्यादि । गोदुह्[1]शब्दस्य भेदः ॥ ५ ॥

## दादे[2]र्घः[3] । ६ ।

दादेर्धातोर्हकारस्य घत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । गोदुघ् सि इति स्थिते ॥ ६ ॥

## आदिजबानां झभान्तस्य झभाः स्ध्वोः । ७ ।

धातोर्झभान्तस्यादौ वर्तमानानां जबानां झभा भवन्ति सकारे ध्वशब्दे च परे नाम्नश्च रसे पदान्ते च ॥ ७ ॥

---

१ हकारान्तत्वेऽपि अनडुह्शब्दापेक्षया गोदुह्शब्दस्य भेदः कश्चिद्विशेषोऽस्ति । गां दोग्धीति गोधुक् । 'दुह प्रपूरणे' गोपूर्वः क्विप्प्रत्ययान्तः ।

२ दः दकार आदिर्यस्य स दादिस्तस्य दादेः षष्ठ्येकवचनान्तम् ।

३ घः प्रथमैकवचनान्तम् । ४ **दादेरिति** । दकारादेर्धातोर्हकारस्य घत्वं भवति झसे परे नाम्नस्तद्धिकारस्य रसे परे अथवा पदान्तविषये । अनेन भकारादौ सुपि च हस्य घः ॥५॥ झभान्तस्य धातोरादौ वर्तमानानां जबानां झभा भवन्ति । जडदगबानां क्रमेण झढघबभा भवन्ति सकारे ध्वे च परे आख्याते आत्मनेपदे से ध्वे ध्वं सम्बन्धिनि परे, नाम्नश्च रसे पदान्ते चेत्यर्थः ॥ केचित्तु जभतीति जप् जभौ जभः इत्यादौ प्रयोगे अकारस्य

**वाऽवसाने । ८ ।**

अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा । गोधुक् गोधुग् गोदुहौ गोदुहः । हे गोधुक् हे गोधुग् हे गोदुहौ हे गोदुहः । गोदुहं गोदुहौ गोदुहः । गोदुहा । भकारादौ 'दादेर्घः' इति घत्वे आदिजबस्य दकारस्य झभे धकारे च कृते "झबे जबाः" । गोधुग्भ्यां गोधुग्भिः । "खसे चपा झसानाम्" । "क्विलात् षः सः कृतस्य" इति षत्वम् । क्ष्संयोगे क्षः । गोधुक्षु । मधुलिह्[1]शब्दस्य विशेषः ॥ ८ ॥

**हो ढः । ९ ।**

धातोर्हकारस्य ढत्वं भवति झसे परे नाम्नश्च रसे पदान्ते च । "वाऽवसाने" । मधुलिट् मधुलिड् मधुलिहौ मधुलिहः । हे मधुलिट् हे मधुलिड् हे मधुलिहौ हे मधुलिहः । मधुलिहं मधुलिहौ मधुलिहः । मधुलिहा मधुलिड्भ्यां मधुलिड्भिः । इत्यादि ।

तुरासाह्शब्दस्य भेदः ॥ ९ ॥

**सहेः षः साढि । १० ।**

साढिरूपे सति सहेर्धातोरसकारस्य षकारादेशो भवति । तुराषाट् तुराषाड् इत्यादि । द्रुह्शब्दस्य भेदः ॥ ११ ।

**[2]द्रुहादीनां घत्वढत्वे वा । ११ ।**

---

झकारासम्भवात्—'आदिडबानां ढभान्तस्य ढभाः—स्ध्वोः' इत्येवं सूत्रं पठन्ति ॥ अनेन यत्र रसप्रत्याहारस्तत्र दस्य धः ॥

१ मधु मकरन्दं पुष्परसं लेढीति मधुलिट् भ्रमरः । मधुलिह्शब्दस्य रसे पदान्ते च विशेषः । २ द्रुहादीनामिति । आदिशब्दान्मुह्स्नुह्स्निहो

द्रुहादीनां धातूनां घत्वढत्वे वा भवतो रसे पदान्ते च। मित्रधुक् मित्रधुग् मित्रधुट् मित्रधुड् मित्रद्रुहौ मित्रद्रुहः। श्रावण्येवम्। मित्रद्रुहम् मित्रद्रुहौ मित्रद्रुहः। मित्रद्रुहा। 'झबे जबाः'। मित्रधुग्भ्यां मित्रधुड्भ्याम्। मित्रधुक्षु मित्रधुट्सु इत्यादि। एवं तत्त्वमुहस्नुहादयः॥

रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः॥ ११॥

## [1]चतुराम् शौ च। १२।

चतुर्शब्दस्यामागमो भवति पञ्चसु परेषु शौ च। चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः २॥ १२॥

## रः सङ्ख्यायाः। १३।

रेफान्तसङ्ख्यायाः परस्यामो नुडागमो भवति। णत्वं द्वित्वं च। चतुर्णाम् चतुर्षु। नकारान्तो राजन्शब्दः। 'नोपधायाः' इति पञ्चसु दीर्घः॥ १३॥

---

गृह्यन्ते। अत्रापि—चार्थो 'वा'शब्दः। अन्यथा घत्वढत्वाऽभावे तृतीयं रूपं स्यात्। क्वचित्तु 'घत्वं ढत्वे वे'ति पाठः। तदा ढत्वे सति घत्वं वा भवतीत्यर्थः। तत्र द्रुहेर्हादित्वेऽप्यस्मादेव वाक्यभेदेन ढत्वम्। क्वचिच्च सूत्रपाठादौ 'द्रुहां वे'ति सूत्रं, व्याख्या पूर्ववत्। ततश्च द्रुहादीनां घत्वं वा भवति। घत्वाभावे चोत्सर्गतः ढत्वमिति सूत्रार्थो दर्शितः॥

१ **चतुरामिति**। विसर्गलोपे छान्दसः सन्धिः। चतुर इति षष्ठयन्तं वा। पञ्चस्वित्यनुवृत्तिसामर्थ्यात्प्रियचत्वा इत्यादौ गौणत्वेऽपि। 'रः सङ्ख्याया' इत्येन सङ्ख्यावाचित्वे। एवं गौणत्वे तु 'प्रियचतुराम्। प्राधान्ये तु—'परमचतुर्णाम्'। 'रो विसर्ग' इत्यत्र वाऽनुकर्षणाल्लोकाद्वा चतुर्ष्वित्यादौ विसर्गाभावः। 'यक् चतुर्ष्वि'ति ज्ञापकाच्च॥

## नाम्नो[1] नो लोपशधौ । १४ ।

नाम्नो नकारस्यानागमजस्य लोपश् भवति रसे पदान्ते चाऽधौ । राजा राजानौ राजानः । हे राजन् हे राजानौ हे राजानः । राजानं राजानौ । "अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ" । "स्तोः श्चुभिः श्चुः" इति चुत्वे नकारस्य ञकारः ॥ १४ ॥

## ञ्नोर्ज्ञः[2] । १५ ।

ञकारनकारयोर्योगे ज्ञो भवति । राज्ञः । राज्ञा राजभ्यां राजभिः । राज्ञे राजभ्यां राजभ्यः । 'ङेङ्योः' । राज्ञि राजनि राज्ञोः राजसु इत्यादि । एवं यज्वन्-आत्मन्-सुधर्मन्-प्रभृतयः ।

यज्वा यज्वानौ यज्वानः । यज्वानं यज्वानौ । 'अम्वयुक्तात्' इति विशेषणादल्लोपो नास्ति । यज्वनः । यज्वना इत्यादि । श्वन्-युवन्-मघवन्-शब्दानां पञ्चसु राजन्शब्दवत् प्रक्रिया । शसादौ तु विशेषः ॥ १५ ॥

## श्वादेर्वं[3] उः । १६ ।

---

१ नाम्नो न इति— समानाधिकरणे षष्ठी । नकारान्तस्य नाम्न इत्यर्थः । नकारान्तत्वं चोपदेशावस्थायामेव । लोपस्यादेशविशेषत्वात्षष्ठीनिर्दिष्टस्येत्यन्त्यस्य । अन्यथा नरनारायणादिष्वादिभूतस्यापि नस्य लोपप्रसङ्गः । तथा 'सुहिन्' 'प्रशान्' इत्यादावुपदेशकाले नान्तत्वाऽभावान्न लोपप्रसङ्गः । 'मो नो धातो'रित्यादिना मस्य नकारादेशात् । 'अधा'वित्यस्य ङेरप्युपलक्षणाद्वैदिकत्वाद्वा परमे व्योमन् इत्यादौ ङावपि नलोपाऽभावः । २ ञ्नोर्ज्ञ इति । अत्र ञकारात्परेण नकारेण योगे 'ज्ञ' इत्यर्थाद्भवाज्ञानातीत्यादौ न, वक्तव्याद्वा । ३ श्वादेः । 'वसोर्व उ'मित्यतो 'व' 'उ'मित्यनुवर्तते । तत्र च

श्वादेर्वकारस्य उत्वं भवति शसादौ स्वरे परेऽतद्धिते ऽपि ईकारे च । शुनः । शुना श्वभ्यां श्वभिरित्यादि । युवन्शब्दस्य वकारस्योत्वे कृते--'उवर्णे दीर्घः सह' । यूनः । यूना युवभ्यां युवभिरित्यादि । [1]मघोनः । मघोना मघवभ्यामित्यादि ।

पथिन्शब्दस्य भेदः ॥ १६ ॥

## इतोऽत् पञ्चसु । १७ ।

पथ्यादीनामिकारस्याऽकारादेशो भवति पञ्चसु स्यादिषु परेषु ॥ १७ ॥

## थो न्थ्‌ । १८ ।

पथ्यादीनां थकारस्य नुडागमो भवति पञ्चसु स्यादिषु परेषु । पन्थन् सि इति स्थिते ॥ १८ ॥

## आ सौ । १९ ।

पथ्यादीनां टेरात्वं भवति सौ परे । पन्था: पन्थानौ पन्थानः ।

---

वकारेण युक्तः अः व इत्यर्थावधारणात्सस्वरस्योत्वम् । वकारमात्रोत्वे तु अकारश्रवणं स्यात् । न चाऽकारस्याल्लोपः स्वरे इति लोपः स्यादिति वाच्यम् । सप्तम्येकवचनेऽल्लोपविकल्पात्पक्षे श्रवणप्रसङ्गात् । शसादावित्यादिशब्दादीकारे वेत्युक्तम् । क्वचिदीपि इति सूत्रम् । तत्र च ईश्च ईप्च तयोः समाहार ईप् । 'तस्मि'न्नित्यधिकारः । शुनी मघोनी युवतीत्यादौ निपातनान्न । ईकारे च--शोभना युवानो ययोः कुलयोस्ते सुयूनी इत्यादि ॥

१ मघ कौटिल्ये । मघनं मघः । मघोऽस्यास्तीति मघवान् । मघवन्तौ इत्यादि । वत्प्रत्ययान्तो मघवच्छब्दोऽन्य एवेति प्रसादकृतः ॥

२ **इतोऽदिति** । 'पथां टे'रित्यतः 'पथा'मित्यनुवर्तते । तत्र 'पन्था'

आत्वविधानान्न सेर्लोपः । हे पन्थाः । पन्थानं पन्थानौ ॥ १९ ॥

**पथां टेः । २० ।**

पथ्यादीनां टेर्लोपो भवति शसादौ स्वरे परे । पथः । पथा पथिभ्यां पथिभिरित्यादि । एवं मथिन्-ऋभुक्षिन्-शब्दौ।

दण्डिन्—शब्दस्य भेदः ॥ २० ॥

**ईनां शौ सौ । २१ ।**

इन्-हन्-पूषन्-अर्यमन्-इत्येतेषां शौ सौ चाऽधौ परे उपधाया दीर्घो भवति । नलोपसिलोपौ । दण्डी दण्डिनौ दण्डिनः । हे दण्डिन् । दण्डिनं दण्डिनौ दण्डिनः । दण्डिना दण्डिभ्यां दण्डिभिरित्यादि । ब्रह्महा ब्रह्महणौ ब्रह्महणः । हे ब्रह्महन् हे ब्रह्महणौ हे ब्रह्महणः । ब्रह्महणं ब्रह्महणौ । शसादौ त्वकारलोपः ॥ २१ ॥

**हनो घ्ने । २२ ।**

हन्तेर्धातोर्हकारस्य घकारो भवति नकारे ञ्णिति च परे ।

---

मिति बहुवचनेन मथिन्ऋभुक्षिन्शब्दावप्युपादीयेते ।

१ **इनां शौ** । अत्रापि बहुवचनस्य बहूपस्थापकतामभिप्रेत्याह— **इन्हन्नित्यादि** । इनः प्रत्ययत्वादिन्नन्तस्य नोपधाया इत्यनेन सिद्धेऽपि नियमार्थः । 'सिद्धे सत्यारम्भो नियमार्थे'ति न्यायादिति प्रसादवृतः ॥

२ **हन इति** । हनः घ् ने इति छेदः । 'हनो' घत् इत्यतो हन इत्यनुवर्तनीयं, ततश्च हन्तेर्नकारे परे हन्तेर्हस्य घत्वं भवतीत्यर्थः । अन्यथा वृत्रहन्नमस्ते जुहावेत्यत्रापि प्रसङ्गात् । तत्र हकाराव्यवहितपरत्वसंभवान्नस्य हाव्य-

घसंयोगो णत्वनिषेधार्थः[1] । ब्रह्मघ्नः । ब्रह्मघ्ना ब्रह्महभ्यां ब्रह्महभिरित्यादि । पूषा पूषणौ पूषणः । हे पूषन् हे पूषणौ हे पूषणः । पूषणं पूषणौ ॥ २२ ॥

**षणोः ष्णः । २३ ।**

षकारणकारसंयोगे ष्णो भवति शसादौ स्वरे परे । 'पूषन्-शब्दस्य शसादौ स्वरे परे वा टेर्लोपः' । पूष्णः । पूष्णा पूषभ्यां पूषभिः । पूष्णः । **ङौ टिलोपो वेति केचित्** । पूष्णि पूषणि पूषि, पूष्णोः पूषसु । अर्यम्णः । अर्यम्णा अर्यमभ्याम् । इत्यादि ।

संख्याशब्दाः पञ्चन्प्रभृतयो बहुवचनान्तास्त्रिषु लिङ्गेषु सरूपाः । पञ्चन् जस् इति स्थिते ॥ २३ ॥

**जश्शसोर्लुक्[2] । २४ ।**

षकारनकारान्तसंख्यायाः परयोर्जश्शसोर्लुक् भवति । 'प्रत्ययलोपे प्रत्ययलक्षणम्'[3], 'लुकि नैं तन्निमित्तम्' । लुकि सति तन्निमित्तमङ्गकार्यं न स्यात् । तेन 'नोपधायाः' इति दीर्घत्वं न । पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः ॥ २४ ॥

---

वधानपरत्वम । ञिणतपरत्वं तु धातोरिति विवेकः । एवं च वृत्रहणावित्यादावप्रसङ्गः ।

१ **घसंयोग इति** । 'क्वचिदैकपद्यं णत्वहेतु'रिति क्वचिच्छब्दाद्धन्तेरकारपूर्वस्यैवेत्यर्थाद्घसंयोगे च तदभावाण्णत्वन्नेत्यर्थः ॥

२ **जश्शसोरिति** । 'ष्ण'इत्यनुवर्तते । तत्र च उपदेशकाल एव ष्णान्तत्वविवक्षणाच्छतानीत्यादौ लोपाऽप्रसङ्गः । ३ 'प्रत्ययलोपे प्रत्ययलक्षण'मिति जश्शसोर्लोपेऽपि तन्निमित्तोपधाया दीर्घाकारलोपादिप्राप्तावाह—**लुकीति** । लुक्शब्देन वर्णाऽदर्शने सति तन्निमित्तमङ्गकार्यं न भवतीत्यर्थः ।

**ष्णः । २५ ।**

षकारनकारान्तसंख्यायाः परस्यामो नुडागमो भवति । 'नोपधायाः' इति दीर्घः । 'नाम्नो नो लोपशधौ' । पञ्चानाम् । पञ्चसु । एवं सप्तन् नवन्- दशन्--प्रभृतयः ।

अष्टन्शब्दस्य भेदः ॥ २५ ॥

**अष्टनो डौ वा । २६ ।**

अष्टन्शब्दात्परयोर्जश्शसोर्वा डौ भवति । डित्वाट्टिलोपः । अष्टौ अष्टौ । अष्ट । अष्ट ॥ २६ ॥

**वाऽऽसु । २७ ।**

वा-आ--आसु इति छेदः । अष्टन आसु विभक्तिषु परासु वा टेरात्वं भवति । अष्टभिः अष्टाभि । अष्टभ्यः अष्टाभ्यः । अष्टानाम् । अष्टसु अष्टासु । मकारान्त इदम्शब्दः ॥ २७ ॥

**इदमोऽयं पुंसि । २८ ।**

इदम्शब्दस्य पुंसि विषये अयमादेशो भवति सिप्रहितस्य । अयम् । द्विवचनादौ "त्यदादेष्टेरः स्यादौ" इत्यकारः । इद औ इति स्थिते ॥ २८ ॥

---

१ **ष्णः** । ष् न् च ष्ण्, तस्मात् । अत्रापि सङ्ख्यायाः प्राधान्ये परमपञ्चानामित्यादौ भवत्येव । गौणत्वे तु प्रियपञ्चानामित्यादौ न । २ **अष्टन इति** । अत्र आकारप्रश्लेषात् 'वासु' इत्यनेन आत्वपक्षे एव डौविधिः । अत्रापि सङ्ख्याया इत्यनुवृत्तेर्गौणत्वे नात्वम् । न वा डौ । वस्तुतो 'वासु' इत्यत्र आ इति तृतीयैकवचनेन 'सु' इति सप्तमीबहुवचनेन च प्रत्याहारग्रहणादत्रात्वाभाव एव । यद्यप्यत्रात्वं स्याड्डाविति डित्करणं व्यर्थं स्यात्, गौणत्वे प्यात्वं

## दस्य मः । २९ ।

त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे । इमौ इमे । सर्वादित्वाज्जसीति इकारः । त्यदादीनां घेरभावः । इमम् इमौ इमान् ॥२९॥

## अन टौसोः । ३० ।

ईदमोऽनादेशो भवति टौसोः परयोः । अनेन ॥ ३० ॥

## स्भ्योः[2] । ३१ ।

इदमः[1] सकारे भकारे च परे अकारो भवति कृत्स्नस्य । 'अद्भि' इत्यात्वम् । आभ्याम् ॥ ३१ ॥

## भिस्स् भिस्स् । ३२ ।

इदमदसोर्भिस् भिसेव भवति नतु भकारस्याऽकारः । 'एस्भि बहुत्वे' । एभिः । अस्मै आभ्याम् एभ्यः । अस्मात् आभ्याम् एभ्यः । अस्य अनयोः एषाम् । अस्मिन् अनयोः एषु । किंशब्दस्य "त्यदादेष्टेरः स्यादौ" इत्यकारे कृते सर्वशब्दवद्रूपम् । कः कौ के । कं कौ कान् इत्यादि । धकारान्तस्तत्त्वबुध्शब्दः । तस्य रसे पदान्ते च 'आदिजबानाम्' इति भकारः । 'वाऽवसाने' ।

---

जश्शसोरौत्वं वेत्येके इत्यस्य चानादर एव । अष्टानामित्यत्र नुष्टि सत्यात्वम् । आत्वे वा उपदेशकाले नकारान्तत्वान्नुट् । आत्वाभावेऽपि नुटि उपधादीर्घं च रसादिपरत्वेन नलोप इति समानरूपत्वादेकमेव रूपम् ॥

१ इदम इति । अनेकवर्णत्वात्सर्वस्य । मकारान्तत्वाद्धसेपः सेर्लोपः । 'हे असकौ ब्राह्मणी'त्यादौ सम्बोधनसम्भवेऽपि प्रचुरप्रयोगाभावादभावोक्तिः ।

२ स्भ्यः । स्भि अः । त्यदादेष्टेरः स्यात्स्मीत्यकारे सिद्धेऽपि पुनर्विधान-

तत्त्वभुत् तत्त्वभुद् तत्त्वबुधौ तत्त्वबुधः । हे तत्त्वभुत् हे तत्त्वभुद् हे तत्त्वबुधौ हे तत्त्वबुधः । तत्त्वबुधं तत्त्वबुधौ तत्त्वबुधः । तत्त्वबुधा तत्त्वभुद्भ्यां तत्त्वभुद्भिरित्यादि । एवं मर्मवित् । जकारान्तः सम्राज्शब्दः ॥ ३२ ॥

छशषराजादेः[1] । ३३ ।

छकारान्तस्य शकारान्तस्य षकारान्तस्य च राज् यज् सृज् मृज् भ्राजादेश्च षकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥३३॥

षो डः । ३४ ।

षकारस्य डत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । 'वाऽवसाने' इति टकारो डकारश्च । सम्राट् सम्राड् सम्राजौ सम्राजः । सम्राजं सम्राजौ सम्राजः । सम्राजा सम्राड्भ्यां सम्राड्भिरित्यादि । एवं विराजादयः । दकारान्तास्त्यद्, तद्, यद्, एतच्छब्दाः । तेषां 'त्यदादेष्टेरः स्यादौ' इति सर्वत्राकारे कृते सर्वशब्दवद्रूपं ज्ञेयम् ॥ ३४ ॥

स्तः । ३५ ।

त्यदादेस्तकारस्य सौ परे सत्वं भवति । स्यः त्यौ त्ये । त्यं त्यौ त्यान् । सः तौ ते । तं तौ तान् । यः यौ ये । यं यौ यान् । एषः

---

सामर्थ्यात्सर्वस्येत्येके । तदसत् । त्यदादेष्टेरिति टेरकारविधानात् । अनेन चेदमः षष्ठीनिर्दिष्टत्वेनान्त्यस्येति वैयर्थ्याभावात् ।

१ छशषेति । आदिशब्दात् व्रश्चभ्रस्जसृजमृजयजभ्राजादीनां ग्रहणम् ।

एतौ एते। *एतदोऽन्वादेशे द्वितीयाटौस्स्वेनो वा वक्तव्यः*। उक्तस्य पुनरुक्तिरन्वादेशः। यथाऽनेन बालेन व्याकरणमधीतमेनं छन्दोऽध्यापय। एतम् एतम् एनौ एतौ एनान् एतान्। एनेन एतेन एताभ्याम् एतैः। एनयोः एतयोः एतेषाम्। एतस्मिन् एनयोः एतयोः एतेषु। छकारान्तस्तत्त्वप्राछ् शब्दः। तत्त्वप्राट् तत्त्वप्राड् तत्त्वप्राछौ तत्त्वप्राछः—इत्यादि। थकारान्तोऽग्निमथ् शब्दः। तस्य 'वाऽवसाने'। अग्निमत् अग्निमद् अग्निमथौ अग्निमथः। अग्निमथा अग्निमद्भ्याम् अग्निमद्भिरित्यादि॥ ३६॥

## नो लोपः। ३६।

धातोर्हसान्तस्योपधाभूतस्य नस्य लोपो भवति। *अञ्चेः पञ्चसु नुम् वक्तव्यः*। प्रत्यन् च् इति स्थिते 'स्तोः श्चुभिः श्चुः' इति चुत्वेनाऽत्र ञकारः। संयोगान्तस्य लोपः॥ ३६॥

---

१ एतद् इति। समनन्तरस्येदमोऽप्युपलक्षणात्तस्यापि किञ्चित्क्रियाविशिष्टत्वेनोक्तस्य पुनस्तेनान्येन वा क्रियान्तरविशिष्टत्वेनोक्तिरन्वादेश इत्यर्थः। अत एव 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्यात्' इत्यादौ स्वरूपेण निर्दिष्टस्याप्यातः क्रियाविशिष्टत्वेनोक्त्यभावादन्वादेशत्वाऽभावः। नपुंसके द्वितीयैकवचने 'स्वन्यादे'रित्यत्र 'स्तु' इति योगविभागादमः स्तुआदेशे 'एन'दित्यादिसिद्धिः। "इमं छात्रं छन्दोऽध्यापय। अथो एनं व्याकरणमध्यापय। अनेन रात्रिरधीता। अतो एनेनाहन्यप्यधीयते। अनयोः शोभनं कुलमथो एनयोः प्रभूतं स्व"मित्याद्यूह्यम्। एवमेतदोऽपि॥

२ अञ्चेरिति। अञ्चुगतिपूजनयोरितस्य 'ना लोप' इत्येनेनैव गत्यर्थतायामेव नलोपे पञ्चसु नुम्विधीयते। यद्यपि परत्वान्नश्चापदान्त इत्यनुस्वारः

चोः कुः । ३७ ।

चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च यथासंख्येन । प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चं प्रत्यञ्चौ ॥ ३७ ॥

अञ्चेरलोपो दीर्घश्च । ३८ ।

अञ्चेर्धातोरेकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धिते प्रत्यये ईपि ईकारे च । 'निमित्ताऽभावे नैमित्तिकस्याप्यभावः' । प्रतीचः । प्रतीचा प्रत्यग्भ्यां प्रत्यग्भिः । प्रत्यक्षु ।

---

प्राप्नोति तथापि परस्येष्टवाचित्वात्पूर्वविप्रतिषेधेन अनुस्वारे वा परसवर्णत्वे विशेषाऽभावाच्च 'स्तोः श्चुभिः श्चु'रित्याद्युक्तिः। यत्तु कृताकृतप्रसङ्गित्वेन नित्यत्वात्संयोगान्तलोपे श्चुत्वा-भावात्कुत्वप्रसङ्गः । कृते वा श्चुत्वे संयोगान्तलोपे 'निमित्ताभावे'इति न्यायेन तदभावात्कुत्वमसङ्गतमेव । तस्माद्दिशामिति बहुवचनेन बहूनामुपादानादस्यापि तेनैव कुत्वमिति । तदसत् । सख्यावित्यादौ निमित्ताभावन्यायस्या-नित्यत्वप्रतिपादनात् । वागित्यादावपि दिशामित्यनेनैव कुत्वसम्भवे चोः कुरित्यस्यानर्थक्यापाताच्च । असिद्धं बहिरङ्गमन्तरङ्गे इति बहिरङ्गसंयोगान्तलोपस्यान्तरङ्गे श्चुत्वे-सिद्धत्वाच्चेति **प्रसादकृतः** ॥

१ **अञ्चेरिति** । ईपीति सूत्रानुवृत्तरीपि ईकारे चेत्युक्तम्। चकाराच्चानुक्तसमुच्चयार्थात्तद्धिते इति । 'वेङ्घो'रित्यतो वानुवृत्तेस्तस्य च व्यवस्थया पूजाऽर्थस्याञ्चतेः अचेरिति लुप्तनकारनिर्देशे तु पूजार्थस्य नलोपाभादेव न । अकारस्य लुप्तत्वाच्चाकारस्य चाचश्चेति नियमाद्दीर्घासम्भवाद्विधानसामर्थ्यात्पूर्वस्येति । स चाप्यवहित एव ग्राह्यः । ततश्च 'प्रतीच' इत्यत्र प्र इत्यस्याऽकारस्याऽप्रसङ्गः । तद्धिते प्रतीचीनः-प्रतीच्यः । ईपि-प्रतीची दिक् । ईकारे-प्रतीची कुले । पञ्चस्विति निर्देशेन यत्कार्यं यत्स्त्रीपुंसयोरिवेति नपुंसके नुमभावः । पूजार्थस्य तु पञ्चस्वविशेषः । शसादौ—प्रत्यञ्चः । प्रत्यञ्च्-भ्याम्

एवं तिर्यच्प्रभृतयः । तिर्यङ् तिर्यञ्चौ तिर्यञ्चः । तिर्यञ्चं तिर्यञ्चौ ॥ ३८ ॥

**तिरश्चादयः । ३९ ।**

तिरश्चादयो निपात्यन्ते शसादौ स्वरे परे तद्धिते ईपि ईकारे च । तिरश्चः । तिरश्चा तिर्यग्भ्यां तिर्यग्भिः । तिर्यक्षु । *** उदच्शब्दस्य उदीच इति निपात्यते शसादौ स्वरे परे *** । उदीचः । उदीचा इत्यादि । सम्यङ् । समीचः । समीचा । सध्र्यङ्, सध्रीचः, सध्रीचा । अदद्र्यङित्यादि । तकारान्तो मरुत्-शब्दः । 'वाऽवसाने' । मरुत् मरुद् मरुतौ मरुतः । मरुतं मरुतौ मरुतः । मरुता मरुद्भ्यां मरुद्भिरित्यादि । एवमग्निचित् । तकारान्त-उ(ऋ)कारानुबन्धो महच्छब्दः ॥ ३९ ॥

**वृतो[1] नुम् । ४० ।**

उकारानुबन्धस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि पञ्चसु परेषु ॥ ४० ॥

---

स्थिते संयोगान्तलोपे कुत्वे च प्रत्यङ्भ्यामित्यादि । सुपि ङ्णोः कुक्टुगिति कुकि षत्वे आदेशे च—प्रत्यङ्क्षु ॥

१ **व्रित इति** । उश्च ऋश्च वृ, वृ इत् यस्य स व्रित्, तस्य वृतः । इत्यभिप्रेत्याह—**उकारानुबन्धस्येत्यादि**। नन्वञ्चतेरप्युकारानुबन्धित्वादनेनैव नुम्-सिद्धावञ्चतेर्नुगागम इति न वक्तव्यमिति चेत्सत्यम् । सिद्धे सत्यारम्भो नियमार्थेति 'धातुषूकारानुबन्धेष्वञ्चतेरेवे'ति नियमो भवति । अतः 'उखास्रत्' 'पर्णध्वत्' इत्यादौ नुमभावः । 'नुमयम' इत्यत्र नुमिति योगविभागादञ्जेरित्यस्य युजेरुपलक्षणत्वाद्वा युजेरसमासे नुम् । युङ् । युञ्जौ इत्यादि । समासे तु अश्वयुक् ।

## न्सम्महतोऽधौ दीर्घः शौ च । ४१ ।

न्सन्तस्याप्शब्दस्य महच्छब्दस्य च उपधाया दीर्घो भवति पञ्चसु धिवर्जितेषु शौ च परे । महान् महान्तौ महान्तः । महान्तम् महान्तौ महतः । महता महद्भ्यां महद्भिरित्यादि । उकारानुबन्धो भवच्छब्दः ॥ ४१ ॥

## अत्वसोः सौ । ४२ ।

अत्वन्तस्याऽसन्तस्य च दीर्घो भवति धिवर्जितेषु, सौ च परे । भवान् भवन्तौ भवन्तः । भवन्तं भवन्तौ भवतः । भवता भवद्भ्यामित्यादि । ऋकारानुबन्धस्य भवतृशब्दस्य नुमागम एव, न दीर्घः । भवन् भवन्तौ भवन्तः । भवन्तं भवन्तौ भवत इत्यादि । पठन् पठन्तौ पठन्तः । पठन्तं पठन्तौ—इत्यादि । पचन् पचन्तौ पचन्तः—इत्यादि । शकारान्तो विशशब्दः । 'छशषराजादेः षः' इति षत्वम् । "षो डः" इति षकारस्य डत्वं च । "वाऽवसाने" । चपा जबाश्च । विट् विड् विशौ विशः । इत्यादि । षकारान्तः षष्शब्दो नित्यं बहु-

---

अश्वयुजावित्यादि । पञ्चस्वित्यस्य नपुंसकव्यक्तिविषयत्वेऽपि स्त्रियां त्रित ईब्विधेः पुंसीत्युक्तम् । पुंसोऽसुङित्यतो विभक्तिविपरिणामेन पुंसोरित्यनुवृत्तिर्वा । ततश्च कियत् कियती इत्यादौ न नुम् ॥

१ **न्सम्महत इति** । न्स् च अप् च महत् च एषां समाहारः न्सम्महत्, तस्य-न्सम्महतः । अत्र 'वादीपोः शतु'रित्यतो वानुवृत्तेः महच्छब्दसाहचर्याच्च "अंस विभाजने" इत्यस्य क्विपि अन् अंसावित्यादौ न्सन्तत्वेऽपि न दीर्घ इति **प्रमादकृतः** ॥

२ **अत्वसोरिति** । अतुश्च अस् च अत्वसौ तयोः, अत्वसोः ।

वचनान्तस्त्रिषु सरूपः । 'जश्शसोर्लुक्' । "षो डः" । षट् षड् । षड्भिः । षड्भ्यः २ । "ष्णः" इति नुडागमः । षड्—नाम् इति स्थिते ॥ ४२ ॥

ड् णः । ४३ ।

षान्तसंख्यासम्बन्धिनो डकारस्य णत्वं भवति नामि परे । "ष्टुभिः ष्टुः" षण्णाम् । षट्सु । 'क्वचिदपदान्ते पदान्तताऽऽश्रयणीया' ॥ ४३ ॥

दोषां रः । ४४ ।

दोष्सजुष्आशिष्हविष्प्रभृतीनां षकारस्य रेफो भवति रसे पदान्ते च । दोः दोषौ दोषः । दोषं दोषौ । ***दोष्शब्दस्य शसादौ स्वरे परे नान्तता वा वक्तव्या*** । दोषः दोष्णः । दोषा दोष्णा, दोर्भ्यां दोषभ्यां, दोर्भिरित्यादि । सजूः सजुषौ सजुषः । ***सजूषाशिषो रसे पदान्ते च दीर्घो वक्तव्यः*** । सजूर्भ्यामित्यादि । सकारान्तः पुंस्शब्दः ॥ ४४ ॥

---

अत्रापि वानुवृत्तेः सुष्ठु वस्ते 'सुवः पिण्ड'मित्यादौ न नुमागमः । 'एवे'त्येवकारेण अत्वन्तत्वभावान्न दीर्घ इत्यर्थः । ननु 'षट्सु' इत्यादौ ष्टुत्वं कुतो नेत्यन्त आह—क्वचित्पदान्तेति । अपदान्तेऽपि पदान्तताश्रयणाद्टोरन्त्यादिति ष्टुत्वनिषेधान्न भवतीति भावः ॥

दोषामिति । 'अह्नो रो रात्रि'ष्वित्यतो र इत्यनुवर्तते । बहुवचनं बहूनां ग्राहकमित्यभिप्रेत्याह—दोष्सजुषित्यादि । यद्यपि दाम्यतीति दमेर्डोसि दोरिति, ततश्च परत्वात्सोर्विसर्ग इत्यनेनैव सिद्धिस्तथापि जुषी प्रीतौ जोषणं जुट् तेन सह वर्तत इति सजूर्मित्रमिति षप्रकृतिकस्य विसर्गा-

पुंसोऽसुङ् । ४५ ।

पुंस्शब्दस्य पञ्चसु परेषु असुङादेशो भवति । ङकारोऽन्त्यादेशार्थः । उकारो नुम्विधानार्थः ॥ ४५ ॥

स्वरे मः । ४६ ।

अनुस्वारस्य मकारो भवति स्वरे परे । पुमस् सि इति स्थिते । "ऋतो नुम्" । "नृसम्महतोऽघौ दीर्घः शौ च" । "संयोगान्तस्य लोपः" । पुमान् पुमांसौ पुमांसः । हे पुमन् । पुमांसं पुमांसौ पुंसः । पुंसा पुंभ्यां पुंभिः ॥ ४६ ॥

असम्भवे पुंसः कक् सौ । ४७ ।

वेदान्तैकवेद्यस्यात्मनो बहुत्वाऽसम्भवेऽर्थे वाच्ये सति पुंस्शब्दस्य सुपि परे कगागमो भवति ॥ ४७ ॥

---

प्राप्तेस्तदर्थं क्रियमाणमेषामप्युपकारकम्, अव्युत्पन्नपक्षाश्रयेण वा । नचाशीर्व्यतीत्यादौ रेफप्रकृतिकस्य खपे सेत्यनेन पक्षे रेफादेशप्रसङ्गः स्यादिति वाच्यम् । वक्तव्यत्वाद्वाशब्दव्यवस्थया वा तदभावात्, शसादावन्नन्तता वा वक्तव्येत्यत्र अकारोपादानं भ्यामित्यादौ को च पक्षे श्रवणार्थम् । **सजुषाशिषोरिति** । 'य्वोर्विहस' इति सूत्रेणेत्यर्थः । आङ्पूर्वस्य शसेः क्विपि उपधाया इकारे धातुसंबन्धित्वादिवर्णोवर्णयोः, अथवा वक्तव्यारम्भसामर्थ्यात् 'य्वोर्विहस' इति दीर्घविधेरसार्वत्रिकत्वद्योतनात्—'कुर्व' इत्यादौ दीर्घाभावः। अव्युत्पत्तिपक्षाश्रयेऽपि दीर्घविध्यर्थं वा सप्तमीबहुवचने धातोरपि रेफस्य विसर्गः। धातोर्नेति नियमात् । ततश्च वा शरीति विसर्जनीयसकारौ ॥

१ **असम्भवे इति** । असम्भवे—वैदिकप्रयोगे । वेदान्तैकवेद्यस्यात्मनः "एकमेवाद्वितीयं, नेह नानास्ति किंचन" इत्यादिभिरेकत्वेन प्रातिपादितस्य पुंसः 'बहुषु बहुवचन'मिति बह्वर्थवाचित्वे विहितबहुवचनाऽसम्भव

## स्कोराद्योश्च । ४८ ।

संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च। पुंक्षु । एवं विद्वच्छन्दः। विद्वान् विद्वांसौ विद्वांसः। विद्वांसं विद्वांसौ ॥ ४८ ॥

## वसोर्व उः । ४९ ।

वसोः सम्बन्धिनो वकार उत्वं प्राप्नोति शसादौ स्वरे परे, तद्धिते ईपि ईकारे च । विदुषः । विदुषा । 'वसां रसे'। विद्वद्भ्यां विद्वद्भिः । विद्वत्सु इत्यादि । सुवचस्शब्दस्य "अत्वसोः सौ" इति दीर्घः । सुवचाः सुवचसौ सुवचसः । हे सुवचः । सुवचसं सुवचसौ सुवचसः । सुवचसा । 'स्रोर्विसर्गः' । 'हवे' । उत्वम् । 'उ

---

इत्यर्थः। अथवा संयोगान्तलोपेन पुंस्विति सर्वत्र सम्भवे एवमुक्तिः। अथवा नास्ति सम्भवो बुद्धेः सूत्रादेश्च यत्राऽसावसम्भवः, तत्र वाक्ये सौ परतः कगागमो भवतीत्यर्थः। पुंक्षु बहुष्वपीत्यादिप्रयोगस्यासंभवे उद्भाविते कग्विधानेन सम्भवतीत्यर्थः। तत्र संयोगान्तलोपे एकदेशविकृतस्यानन्यत्वेन कगागमे षत्वे क्षादेशे मस्यानुस्वारः। यत्तु मध्यवर्तिनोऽपि सकारस्यादित्वविवक्षया स्कोराद्योश्चेति सलोप इति। तदसत्। एवंविधादित्वविवक्षाया अप्रामाणिकत्वात्। उक्तयुक्त्यैव सम्भवे क्लिष्टकरणे प्रमाणाभावात्, अतिप्रसङ्गाच्चेति प्रसादकृतः।

१ **वसोरिति**। अत्रापि पूर्ववद्वकारसहिताकारस्य उत्वम्। वसोरेकानुबन्धकस्य द्व्यनुबन्धकस्यापि क्वसोरप्युपलक्षणत्वात्—तस्थिवान्। तस्थुषः। वस्यात्वे 'निमित्तभावा'दिति न्यायेनेण्निवृत्तावातोऽनपीत्यालोपः। तथा जगन्वान् जग्मुष इत्यत्रापि मो नो धातोरित्यस्याऽभावः, निमित्ताभावात्। तद्धिते—वैदुष्यं विदुष्मान्। ईपि—विदुषी। ईकारे—विदुषी कुले।

ओ'। सुवचोभ्यां सुवचोभिः। एवं चन्द्रमस्शब्दः। उशनस्-शब्दस्य भेदः ॥ ४९ ॥

**उशनसाम्। ५०।**

उशनस् पुरुदंसस् अनेहस् इत्येतेषां सेरधेर्डा भवति। डकारष्टिलोपार्थः। उशनाः उशनसौ उसनसः। ***उशनसो धौ सान्तता नान्तता अदन्तता वा वक्तव्या***। हे उशनः हे उशनन् हे उशन। हे उशनसौ हे उशनसः। अदस्शब्दस्य विशेषः 'त्यदादेष्टेरः' इति सर्वत्राकारः। अदस् सि इति स्थिते ॥५०॥

**सौ सः। ५१।**

अदसो दकारस्य सौ परे सत्वं भवति ॥ ५१ ॥

**सेरौ। ५२।**

अदसः सेरौ भवति। असौ। द्विवचने अदस् औ इति स्थिते 'दस्य मः' ॥ ५२॥

**मादू। ५३।**

उश्च ऊश्च ऊ। अदसो मकारात्परस्य ह्रस्वस्य ह्रस्व उकारो भवति दीर्घस्य च दीर्घ ऊकारो भवति। अमू। बहुवचने सर्वा-

---

**उशनसो धाविति**। सकारान्तस्योशनश्शब्दस्य सकारस्थाने नकारेण नान्तता, सकारलोपेन चादन्ततापीत्यर्थः। नान्तादन्तयोर्विकल्पे पक्षे सान्तप्रकृतिरपीति त्रैरूप्यम्।

**सौ इति**। अत्र त्यदादेरित्यनुवृत्तावपीदमो दस्य सावसम्भवाददस इत्युक्तम्। मादू उ इति विगृह्य व्याचष्टे—**उश्च ऊश्चेति**। आदेशयोरेकमात्रद्विमात्रत्वान्मात्स्वरावादेशिनावपि एकमात्रद्विमात्रौ ग्राह्यौ। ततश्चान्तरतमत्वादेकमात्रस्यैकमात्र उः। द्विमात्रस्य च द्विमात्र इत्यर्थः॥

दित्वात् 'जसी' इति ई । "अ इ ए" । अमे इति स्थिते ॥ ५३ ॥

ऐरी बहुत्वे । ५४ ।

बहुत्वे सत्यदस एकारस्य ईकारो भवति । अमी । अमुम् अमू अमून् । मत्वे उत्वे च कृते "टा ना स्त्रियाम्" । अमुना । द्विवचने 'अद्वि' इत्यात्वं पश्चादूकारः ॥ अमूभ्याम् ॥ ५४ ॥

भिस् भिस् । ५५ ।

इदमदसोर्भिस् भिसेव भवति, न तु भकारस्याकारः । अमीभिः । अमुष्मै अमूभ्याम् अमीभ्यः । अमुष्मात् अमूभ्याम् अमीभ्यः । अमुष्य । ओसि एत्वे अयादेशे च कृते पश्चादुकारः । अमुयोः अमीषाम् । अमुष्मिन् अमुयोः अमीषु ॥ ५५ ॥

सामान्ये अदसः कः स्यादिवच्च । ५६ ।

अमुकः अमुकौ अमुके इत्यादि सर्ववत् ॥ ५६ ॥

इति हसान्ताः पुँल्लिङ्गाः ।

---

१ एरीति । अत्रापि मादित्वमनुवृत्तेरमुके इत्यत्र मत्वे च कृते इति वक्तव्यमेतत्, अन्यथा एवंविधनियामकाऽभावात् । २ सामान्ये इति । सामान्ये—विशेषाऽप्रकाशनेऽर्थे अदस्शब्दात्कप्रत्ययो भवति स च स्यादिवत् । सेः सिप्रत्ययस्यादिः प्रकृतिः अदस्शब्दस्तद्वत् । तत्सहितस्याप्यदसोऽदस्कार्यं भवतीत्यपि तन्त्रेणार्थः । अथवा 'सि'शब्देन सकार उपलक्ष्यते । ततश्च सेः सकारस्य आदिवदिति स्यादिवत् सकारात्पूर्वं भवतीत्यर्थः । ततश्च 'तन्मध्ये पतितस्तद्ग्रहणेन ग्राह्य' इति कप्रत्ययसहितस्य 'सेरौ' 'सौ स' इत्यादिकार्ये । वस्तुतः 'स्यादिव'दित्येव पाठः । 'असकौ' इति स्त्रीपुंसयोः। नपुंसके 'अदक' इति । 'सेरौ' इत्यत्र ह्रस्वो वेत्यतो मण्डूकप्लुत्या वानुवृत्तेः कप्रत्ययसहितस्य वा औत्वाभावपक्षे च स्यादिवच्चेति चकारादधिकार्थास्सात्परस्यौत्वे अमुक इति ।

इति हसान्ताः पुँल्लिङ्गाः ।

# अथ हसान्ताः स्त्रीलिंगाः ।

तत्र हकारान्त उपानह्शब्दः ।

## नहो धः । १ ।

नहो हकारस्य धकारादेशो भवति रसे पदान्ते च । "वाऽवसाने" । धस्य तत्वं दत्वं च । उपानत् उपानद् उपानहौ उपानहः । हे उपानत् हे उपानद् । उपानहम् उपानहौ उपानहः । उपानहा उपानद्भ्याम् उपानद्भिः । 'खसे चपा झसानाम्' । उपानत्सु । वकारान्तो दिव्शब्दः । १ ।

## दिव औ सौ । २ ।

दिवो वकारस्य औकारादेशो भवति सौ परे । द्यौः दिवौ दिवः । हे द्यौः । दिव् अम इति स्थिते । २ ।

## वाऽमि । ३ ।

दिवो वकारस्य अमि परे वा आत्वं भवति । द्यां-दिवं दिवौ दिवः । दिवा । ३ ।

## उ रसे । ४ ।

दिवो वकारस्य रसे परे उकारो भवति । द्युभ्यां द्युभिः द्युषु इत्यादि । रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः ।। ४ ।।

## त्रिचतुरोः स्त्रियां तिसृचतसृवत् । ५ ।

स्त्रियां वर्तमानयोः त्रिचतुर्शब्दयोः तिसृ चतसृ इत्येतावादेशौ

---

१ 'दिव औ' इत्येव क्वचित्सूत्रम् ।

२ **उ रस इति** । उश्च रसश्च उरसं, तस्मिन् । 'वसोर्वा उ'मित्यत उमित्यनुवर्तते । ततश्च द्यूषित इत्यादि । केचित्तु 'ऊ रसे' इति पठन्ति । सूत्रे उ उरसे इति छेदः । रहस्य हसोपलक्षणात् उ उ इति योगविभागाद्वा द्युहय इत्यादौ हकारेऽपि उत्वम् । ३ **त्रिचतुरोः स्त्रियां तिसृचतसृ** । ऋ-ऋवदिति छेदः । 'स्त्रिया'मिति त्रिचतुरोर्विशेषणम् । स्त्रीवाचकयोरित्यर्थः ।

भवतो विभक्तौ परतः । ऋकारस्य ऋकारवत् । ततः "स्तुरार्" तिस्रः । तिस्रः । तिसृभिः । तिसृभ्यः ॥ ५ ॥

## न नामि दीर्घः । ६ ।

तिसृ चतसृ इत्येतयोर्दीर्घो न भवति नामि परे । तिसृणाम् । छन्दसि तु वा भवति । तिसॄणाम् तिसृणाम् । तिसृषु । एवं चतसृशब्दः । गिर्शब्दस्य भेदः ॥ ६ ॥

## य्वोर्विहसे । ७ ।

धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्हसपरयोः पदान्ते च । गीः गिरौ गिरः । हे गीः । गिरं गिरौ गिरः । गिरा गीर्भ्याम् गीर्भिः । गीर्षु । एवं धूः धुरौ धुरः । हे धूः । पूः पुरौ पुरः । हे पूः । पुरा पूर्भ्याम् पूर्भिः । पूर्षु । धकारान्तः समिध्-शब्दः । 'वाऽवसाने' । समित् समिद् समिधौ समिधः ।

---

ततश्च प्रियास्तिस्रो वा यस्यासौ प्रियतिसा प्रियचतसेत्यादौ पुंस्यपि स्त्रीवाचकत्वाद्भवत एवादेशौ । प्रियास्त्रयस्त्रीणि वा, प्रियाश्चत्वारश्चत्वारि वा यस्याः सा प्रियत्रिः, प्रियचत्वा इत्यादौ त्रिचतुरोः स्त्रीवाचकत्वाऽभावा-त्स्त्रियामपि नादेशो । १ स्तुरार् इत्यार् न भवतीति । 'ऋतो ङ उ'रित्यतः 'ऋत' इत्यनुवृत्तेस्तस्य च तात्परत्वेन तावन्मात्रग्राहकत्वादस्य च ऋकारातिदेशात् स्तुरार् इति सूत्रेण आर् न भवतीत्यर्थः ।

२ य्वोरिति । इश्च उश्च यू, तयोः य्वोः । र् च व् च व्, तस्मिन् विं । खिलोपेऽपि प्रत्ययलोपे प्रत्ययलक्षणमिति दीर्घः । 'य्वो'रिति योगविभागात्सुपीः सुपिसो इत्यादौ सेर्लोपे सत्यविसर्गेऽपि इकारस्य दीर्घः । 'दोषा'मिति रेफादेशो वा ॥

हे समित् हे समिद् । समिद्भ्यां समिद्भिः । समित्सु । भकारान्तः ककुभ्शब्दः । ककुप् ककुब् ककुभौ ककुभः । हे ककुप् हे ककुब् इत्यादि । दकारान्तास्त्यद्तद्यद्एतत्शब्दाः । 'स्तः' स्यादादेस्तकारस्य सत्वं भवति सौ परे । इति सकारः । दकारान्तास्त्यदादयस्तेषां 'त्यदादेष्टेरः स्यादौ' इति सर्वत्राकारः । "आवतः स्त्रियाम्" इत्याप् । स्या त्ये त्याः । सा ते ताः । या ये याः । अन्वादेशे—एताम् एनान् एते एने एताः एनाः । एवं किम् । का के काः ॥ ७ ॥

## ईयं स्त्रियाम् । ८ ।

इदंशब्दस्य स्त्रियामियं भवति सौ परे सिसहितस्य । इयम्[1] इमे इमाः । इमाम् इमे इमाः । अनया आभ्याम् आभिः । अस्यै आभ्यां आभ्य इत्यादि । चकारान्तस्त्वच्शब्दः । "च्चोः कुः" इति कुत्वम् । त्वक् त्वग् त्वचौ त्वचः । हे त्वक् । त्वग्भ्याम् । त्वक्षु । एवं ऋच्वाच्प्रभृतयः । अप्शब्दो नित्यं बहुवचनान्तः । अप्—जस् इति स्थिते । "न्सम्महतः" इति दीर्घः । अपः ॥ ८ ॥

## भि दपाम्[2] । ९ ।

अबादीनां भकारे परे दत्वं भवति । अद्भिः अद्भ्यः ।

---

१ **इयमिति** । आदेशविधानसामर्थ्यात्त्यदाद्यत्वाऽभावः । हसान्तत्वात्सिलोपः ।

२ **भिदपामिति** । अपामिति बहुवचनान्तनिर्देशान्नित्यबहुवचनान्तस्यैव दत्वं स्यान्न गौणत्वे । अत उक्तम् **अबादीनामिति** । 'तस्य

अपाम् । अप्सु । शकारान्तो दिश्शब्दः ॥ ९ ॥

## दिशां कः । १० ।

दिश् दृश् स्पृश् मृश् इत्यादीनां रसे पदान्ते च कत्वं भवति । दिक् दिग् दिशौ दिशः । हे दिक् हे दिग् । दिशं दिशौ दिशः । दिशा दिग्भ्यां दिग्भिरित्यादि । षकारान्तस्त्विष्शब्दः । "षो डः" इति डत्वम् । "वाऽवसाने" इति टकारः । त्विट् त्विड् त्विषौ त्विषः । त्विषं त्विषौ त्विषः । त्विड्भ्यां त्विड्भिरित्यादि । आशिषूशब्दस्य सजुष्शब्दवद्रूपं ज्ञेयम् । आशीः आशिषौ आशिषः । हे आशीः । आशीर्भ्याम् । आशीष्षु । स्त्रीलिङ्गस्याऽदस्शब्दस्य सौ न विशेषः । द्विवचनादौ टेरत्वे च कृते अनन्तरम् "आबतः स्त्रियाम्" इत्याप् । दीर्घत्वं विभक्तिकार्यञ्च । पश्चात् 'मादू' इति ह्रस्वस्य दीर्घस्य च उकार ऊकारश्च । असौ अमू अमूः । अमुम् अमू अमूः । अमुया अमूभ्याम् अमूभिः । अमुष्यै अमूभ्याम् अमूभ्यः । अमुष्याः अमूभ्याम् अमूभ्यः । अमुष्याः अमुयोः अमूषाम् । अमुष्याम् अमुयोः अमूषु । ***सामान्ये अदसः कः*** । सामान्येऽर्थे वाच्ये सति अदसः कप्रत्ययो भवति । अमुका अमुके अमुकाः । इत्यादि । स्त्रीलिङ्गे सर्वाशब्दवद्रूपं ज्ञेयम् ॥ १० ॥

## इति हसान्ताः स्त्रीलिङ्गाः ।

---

तदुत्तरपदस्य चे' ति तदुत्तरमृतीनामपि भवतीति भावः । षष्ठीनिर्दिष्टत्वादन्तस्य ।

१ दिशामिति । 'चोः कु'रित्यतः 'कुरित्यनुवर्तते ।

इति हसान्ताः स्त्रीलिङ्गाः ।

# हसान्ता नपुंसकलिंगाः प्रदर्श्यन्ते ।

रेफान्तो वार्शब्दः ।

**नपुंसकात्स्यमोर्लुक् । १ ।**

वाः वारि वारि २ । 'अयम' इति विशेषणान्नुम् न भवति । वारा वार्भ्याम् वार्भिः । वार्षु इत्यादि । चतुर्शब्दस्य 'चतुराम् शौ च' इत्याम् । चत्वारि । चत्वारि । चतुर्भिः । चतुर्भ्यः । चतुर्भ्यः । चतुर्णाम् । चतुर्षु । नकारान्तोऽहन्शब्दः ॥ १ ॥

**अन्हः सः । २ ।**

अहन्शब्दस्य नकारस्य सकारो भवति रसे पदान्ते च । 'सोर्विसर्गः' । अहः । "इमौ" । वेड्योः" । अह्नी अहनी अहानि २ । अह्ना अहोभ्याम् अहोभिः । अह्नः अहोभ्याम् अहोभ्यः । अह्नः अहोभ्याम् अहोभ्यः । अह्नः अह्नोः अह्नाम् । । अह्नि—अहनि अह्नोः अहःसु । **ब्रह्मन्शब्दस्य रसे पदान्ते च नस्य लोपो वक्तव्यः*** । ब्रह्म ब्रह्मणी ब्रह्माणि २ । ***सम्बोधने धौ नपुंसके नलोपो वा वक्तव्यः*** । हे ब्रह्म हे ब्रह्मन् । ब्रह्मणा । ब्रह्मभ्यां ब्रह्मभिरित्यादि । एवं चर्मन् वर्मन् शर्मन् कर्मन् व्योमन् दामन् ।

---

१ **अयम इति** । 'नुमनम' इत्यत्र 'नपुंसकस्ये'त्यस्य 'अयम'इति विशेषणादित्यर्थः । २ अन्हः । 'सस्ता'वित्यतः 'स' इति । **ब्रह्मन्शब्दस्येति** । 'नाम्नो नो लोपशधा'वित्यनेनेत्यर्थः । अन्यथा ब्रह्मभ्यां ब्रह्मभिरित्यादावव्द्धीत्यादिप्रसङ्गः । अधाविति निषेधस्य नोक्तमनित्यमिति नाम्नो लोपशिति योगविभागाद्वा सम्बुद्धौ नपुंसकानां नलोपो वेति । हे ब्रह्म- हे ब्रह्मन् ।

नामन् प्रभृतयः । ***नान्तादद्न्ताच्छन्दसि ङिश्योर्वा लोपो वक्तव्यः*** । **छन्दस्यागमजानागमजयोर्लोपालोपौ च वक्तव्यौ*** । परमे व्योमन् । सर्वा भूतानि । त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न भवति, स्यादाविति विशेषणात् । द्विवचनादौ तु टेरत्वे कृते सर्वशब्दवद्रूपं ज्ञेयम् । त्यत् त्यद् त्ये त्यानि । पुनः-स्यत् स्यद् स्ये स्यानि । त्येन त्याभ्यां त्यैरित्यादि । एवं तत् ते तानि २ । यत् ये यानि २ । एतत् एते एतानि २ । किम् के कानि २ । इदम् इमे इमानि २ । तृतीयादौ सर्वत्र पुंवत् ।

चकारान्तः प्रत्यच्शब्दः । प्रत्यक् प्रत्यग् । "अञ्चेरलोपो दीर्घश्च" । प्रतीची । "नुमयमः" । प्रत्यञ्चि । तकारान्तो जगच्छब्दः । जगत् जगती जगन्ति २ । जगता जगद्भ्यां जगद्भिरित्यादि । महच्छब्दे तु "न्सम्महतः" इति विशेषणात् सिविषये दीर्घो न । महत् महती महान्ति २ ।

---

१ **छन्दसीति** । सर्वेत्यत्र सिलोपे आगमजस्यापि नस्य छान्दसो लुक् । निमित्ताऽभावन्यायस्य वाऽनित्वाद्दीर्घस्याऽनिवृत्तिः । अथवा वा अ आ इति च्छेदः । ततश्च शिलोपे निमित्ताभावन्यायेन नुपुपधादीर्घयोर्निवृत्तौ अकारस्य आकारः । अथवा 'वा आ' इति च्छेदः । एव च टेर्लोपः । शेश्च आ भवतीत्यर्थः । ततश्च शिपरत्वाभावादागमजमनित्यमनित्यत्वाद्वा नुमभावे सवर्णदीर्घः । अथाबित्यत्र ङेरुपलक्षणत्वाच्छन्दस्त्वाल्लोपश् । संज्ञापूर्वकत्वेनाऽनित्यत्वाद्वा । 'व्योमन्' इत्यत्र नलोपाऽभावः । परमे भूतानीतिङिस्यन्तत्वद्योतनार्थम् । २ **त्यदादानामिति** । 'लुकि न तन्निमित्त'मिति

इत्यादि । षकारान्तो हविष्शब्दः सजुष् च । हविः हविषी हवींषि २ । इत्यादि । सजूः सजुषी सजूषि २ । एवं सकारान्ताः पयस् तेजस् वचस् प्रभृतयः । पयः पयसी पयांसि २ । पयसा पयोभ्यामित्यादि । अदस्शब्दस्य स्यमोर्लुकि · कृत "स्रोर्विसर्गः" । द्विवचनादौ टेरत्वे कृते मत्वोत्वे—अदः अमू अमूनि २ । अमुना अमूभ्याम् अमीभिः । अमुष्मै अमूभ्याम् अमीभ्यः । अमुष्मात् अमूभ्याम् अमीभ्यः । अमुष्य अमुयोः अमीषाम् । अमुष्मिन् अमुयोः अमीषु ॥ २ ॥

इति हसान्ता नपुंसकलिङ्गाः ।

# अथ युष्मदस्मत्प्रक्रिया ।

अथ युष्मदस्मदोः स्वरूपं निरूप्यते । तयोश्च वाच्यलिङ्गत्वात् त्रिष्वपि लिङ्गेषु समानं रूपम् ।

## त्वमहं सिना । १ ।

युष्मदस्मदोः सिसहितयोस्त्वमहमित्येतावादेशौ भवतो यथासंख्येन । त्वम् । अहम् ॥ १ ॥

---

प्रतिषेधादित्यर्थः ॥

इति हसान्ता नपुंसकलिङ्गाः ।

१ अथेति । संज्ञासंधिस्वरान्तलिङ्गत्रयसाधनानन्तरं युष्मदस्मदोः-युष्मच्च अस्मच्च युष्मदस्मदौ तयोः—स्वरूपं मुख्यस्वरूपमेव निरूप्यते-कथ्यते ।

**युवावौ द्विवचने । २ ।**

युष्मदस्मदोर्द्विवचने परे युव आव इत्येतावादेशौ भवतः ॥२॥

**आमौ । ३ ।**

युष्मदस्मदोः परे औ आम् भवति । युवाम् । आवाम् ॥३॥

**यूयंवयं जसा । ४ ।**

जसा सहितयोर्युष्मदस्मदोर्यूयं वयं इत्येतावादेशौ भवतः । यूयम् । वयम् ॥ ४ ॥

**त्वन्मेदकत्वे । ५ ।**

---

न तु यौणत्वविशेषादिकमित्यर्थः । अत्राह **परः**—ननु यथा सर्वादयो लिङ्गत्रये साधितास्तथा एतावपि कथं न साधितौ । तत्रोत्तरमाह—**तयोश्चेति** । तयोर्युष्मदस्मच्छब्दयोर्वाचि—वचने वाग्व्यवहारेऽलिङ्गत्वात् स्वविषये लिङ्गद्योतकाऽभावात् त्रिष्वपि—पुंस्त्रीनपुंसकलिङ्गेषु समानं सदृशमेव रूपम् । यथा त्रिषु लिङ्गेषु सर्वो जनः, सर्वा जगती, सर्वं जगत् इत्यादिरूपभेदो दृश्यते, न तथैतयोः । यथा त्वं देवः, त्वं देवी, त्वं ब्रह्म इत्यादौ न कोऽपि रूपभेदः । अतः प्राग् न साधितावित्यर्थः । अथ वा वाच्यमितिनामशब्दरूपम्, अभिधेयं विशेष्यपदमित्यर्थः । तस्यैव लिङ्गं विद्यते ययोस्तौ वाच्यलिङ्गौ ॥ यदि वा वाच्यस्य पुरुषस्त्रीकुलादेर्लिङ्गमेव लिङ्गं ययोरिति बहुव्रीहिः । यदुक्तम्—'वाच्यमित्युच्यते भेद्यं तल्लिङ्गं भजते तु यः । विशेषणत्वमापन्नो वाच्यमित्युच्यते इति ॥'

**वाच्यलिङ्गत्वादिति** । वचनं वाक्, तस्यां वाचि-अलिङ्गत्वात्-स्वविषये लिङ्गद्योतका-भावादित्यर्थः ।

**यूयमिति** । यूयं च वयं च यूयंवयं-प्रथमाद्विवचनान्तं । 'जसा' इति जस्शब्दस्य तृतीयैकवचनान्तम् ।

युष्मदस्मदोः त्वत् मत् इत्येतावादेशौ भवत एकत्वे गम्यमाने। एकत्वं नाम एकार्थवाचित्वं न त्वेकवचनम्। तेन त्वत्पुत्रो मत्पुत्र इत्यादौ त्वन्मदादेशौ भवत एव ॥ ५ ॥

**आऽम्भौ । ६ ।**

युष्मदस्मदोष्टेरात्वं भवति अमि सकारे भिसि च परे। त्वाम्। माम्। युवाम्। आवाम्। त्वदादेष्टेरत्वे कृते 'शसि' इति दीर्घत्वम्। ***शसो नो वक्तव्यः*** । युष्मान्। अस्मान्। त्वन्मदादेशे कृते ॥ ६ ॥

**ए[2] टाङ्योः । ७ ।**

युष्मदस्मदोष्टेरेत्वं भवति टा ङि इत्येतयोः परयोः। अयादेशः। त्वया। मया। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः ॥ ७ ॥

**तुभ्यं[3] मह्यं ङ्या । ८ ।**

ङेसहितयोर्युष्मदस्मदोस्तुभ्यं मह्यमित्येतावादेशौ भवतः। तुभ्यम्। मह्यम्। युवाभ्याम्। आवाभ्याम् ॥ ८ ॥

---

१ **त्वदिति**। त्वञ्च मच्च त्वन्मत् प्रथमाद्विवचनान्तम्। एकस्य भाव एकत्वं, तस्मिन्नेकत्वे—सप्तम्येकवचनान्तम्।

एकवचने एकार्थवाचित्वे वा युष्मदस्त्वत् अस्मदश्च मत् आदेश इत्यर्थः।

२ **टाङ्योरिति**। टा च ङिश्च टाङी, तयोः टाङ्योः—सप्तमीद्विवचनान्तम्।

३ **तुभ्यं मह्यं ङ्येति**। तुभ्यं च मह्यं च तुभ्यंमह्यं प्रथमाद्विवचनान्तं। ङ्या इति ङेशब्दस्य तृतीयैकवचनान्तम्।

**भ्यसः श्भ्यम् । ९ ।**

युष्मदस्मद्भ्यां परस्य भ्यसः श्भ्यं भवति । शकारो भकारादित्वव्यावृत्त्यर्थः, तेनाऽऽत्वैत्वे न भवतः । युष्मभ्यम् । अस्मभ्यम् ॥९॥

**ङसिभ्यसोः श्तुः । १० ।**

पञ्चम्या ङसिभ्यसोः श्तुर्भवति । शकारः सर्वादेशार्थः । उकारः सुखोच्चारणार्थः । त्वत् । मत् । युवाभ्याम् । आवाभ्याम् । युष्मत् । अस्मत् ॥ १० ॥

**तवमम[2] ङसा । ११ ।**

ङसा सहितयोर्युष्मदस्मदोस्तव मम इत्येतावादेशौ भवतः । तव । मम । युवयोः । आवयोः । सर्वादित्वात्सुट् ॥ ११ ॥

**सामाकम्[3] । १२ ।**

युष्मदस्मद्भ्यां परः साम् आकं भवति । युष्माकम् ।

---

१ भ्यमादेशस्य गुरुत्वात्सर्वस्य प्राप्तौ शकारग्रहणं किमर्थमित्याह—**शकारो भकारादित्वव्यावृत्त्यर्थ इति** । उच्चारणमात्रः शकारो भकारादित्वव्यावृत्त्यर्थः । भकार एव आदिर्यस्य स भकारादिस्तस्य भावो भकारादित्वं तस्य व्यावृत्त्यर्थो निषेधार्थः । भ्यम् इत्येव चेत् क्रियते, तदा 'अद्भि' 'एस्भि बहुत्वे' एतयोः सूत्रयोः प्राप्तिर्भवति भकारपरत्वात् । अतस्तन्निवारणार्थं श्भ्यमिति क्रियते इत्याशयः ।

२ **तव मम ङसेति ।** तव च मम तवमम प्रथमाद्विवचनान्तं । ङसेति ङस्शब्दस्य तृतीयैकवचनान्तम् ।

**'सामाकम्'** । साम् प्रथमैकवचनान्तम् । आकम्—प्रथमैकवच-

अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ॥ १२ ॥

अथाऽनयोरादेशविशेषविधिः प्रदर्श्यते—

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्ते मे वां नौ वस्नसौ । १३ ।**

तत्रैकवचनेन सह ते मे भवतः, द्विवचनेन सह वां नौ, बहुवचनेन सह वस्नसौ । उक्तञ्च—

**'स्वामी ते स समायातः स्वामी मे साम्प्रतं गतः ।**
**नमस्ते भगवन् ! भूयो देहि मे मोक्षमव्ययम् ॥ १ ॥**

---

नान्तम् । युष्मदस्मद्‌भ्यां परस्य सामः—सुट्सहितस्य आम आकम् इत्यादेशो भवतीत्यर्थः ।

१ पुनर्विशेषमाह—**अथेति** । युष्मदस्मच्छब्दयोः साधनानन्तरं कश्चित् आदेशस्य विशेष आदेशविशेषस्तस्य विधिः । आदेशाः पूर्वं कथिताः । अथ आदेशिविशेषविधिः ) कथ्यते इत्यध्याहारः ।

२ **युष्मदस्मदोरिति** । अयं भावः—षष्ठीचतुर्थ्येकवचनेन सह युष्दस्ते अस्मदश्च मे आदेशः । द्वितीयैकवचनस्य त्वा मा इति विशेषविधानात् ते मे न भवतः । षष्ठीचतुर्थीद्वितीयाद्विवचने युष्मदो वाम् अस्मदश्च नौ आदेशः । षष्ठीचतुर्थीद्वितीयाबहुवचने युष्मदो वस् अस्मदश्च नस् आदेशः । द्वितीयाचतुर्थीषष्ठीति वक्तव्ये व्युत्क्रमेण षष्ठीचतुर्थीद्वितीयाभित्युक्तत्वात् क्वचित्त्वया मयेत्यस्मिन्नर्थे तेमे भवत इत्यपि सूचितम् । यथा 'श्रुतं ते निखिलं पार्थ' इत्यादि प्रयोगेषु । तथा च—'कया वृत्त्या वर्तितं वश्चरद्भिः क्षितिमण्डलम्' । तथा च रघुकाव्ये—'शैये केन विनीतौ वा'मित्यादि प्रथमाद्विवचनेऽपि वामित्यादेशार्थम् । केचित्तु 'वा'मित्यव्ययं मन्यन्ते ॥

**यथा स्वामीति** । स ते तव स्वामी समायातः । मे मम स्वामी

**स्वामी वां स जहासोच्चैर्दृष्ट्वा नौ दानयाचनाम् ।**
**राजा वां दास्यते दानं, ज्ञानं नो मधुसूदनः ॥ २ ॥**
**देवो वामवताद्विष्णुर्नरकान्नौ जनार्दनः ।**
**स्वामी वो बलवान् राजा स्वामी नोऽसौ जनार्दनः ॥३॥**
**नमो वो ब्रह्मविज्ञेभ्यो ज्ञानं नो दीयतां धनम् ।**
**सानन्दान्वः प्रपश्यामः पश्यामो नः सुदुःखिनः' ॥ ४ ॥**

**त्वा माऽमा । १४ ।**

अमा सहितयोर्युष्मदस्मदोस्त्वामादेशौ भवतः ।

---

सांप्रतं गतः । अत्र स्वामित्वे षष्ठी तस्या एकत्वे ते मे इत्यादेशौ दर्शितौ ।

चतुर्थ्येकवचने दर्शयति—**नम इति** । भगो ज्ञानमस्यास्तीति भगवान् तत्सम्बुद्धौ हे भगवन् । भूयः पुनरपि वारंवारं ते तुभ्यं नमः । अत्र नमः–शब्दयोगे चतुर्थी । तत्र युष्मदस्ते आदेशः । मे मह्यम् अक्षयं मोक्षं देहि प्रयच्छ । अत्र दानार्थे चतुर्थी । अस्मदो मे आदेशः, एकवचनत्वात् ॥

द्विवचनादेशं दर्शयति —**स्वामीति** । स वां युवयोः स्वामी उच्चैरतिशयेन जहास–अहसत् । किं कृत्वा ?, नौ आवयोः दीनयाचनां पीडां दृष्ट्वा । अत्र षष्ठीद्विवचने युष्मदो वाम् अस्मदो नौ । वां युवाभ्यां राजा भूपतिर्दानं दास्यते । मधुसूदनः—कृष्णः आवाभ्यां ज्ञानं तत्त्वावबोधं दास्यते । अत्र चतुर्थी द्विवचनम् ॥ वां युवां विष्णुदेवोऽवतात् पातु । जनार्दनः कृष्णो नौ आवां नरकाद्रक्षतु । अत्र द्वितीयाद्विवचनम् ॥ बहुत्वे दर्शयति—**स्वामीति** । वो युष्माकं स्वामी राजा बलवान् बलयुक्तः । नोऽस्माकम् असौ जनार्दनः कृष्णः स्वामी । षष्ठीबहुत्वे रूपमिदम् । युष्मदो वस् अस्मदो नस् ॥

१ **त्वामेति** । युष्मदः अम्सहितस्य त्वा अस्मदः मा आदेश इत्यर्थः ।

'पश्यामि त्वा मदालीढं पश्य मा मदभेदकम् ।
पश्यामि त्वा जगत्पूज्यं पश्य मा जगतां पते' ॥१४॥

नाऽऽदौ । १५ ।

पादादौ वर्तमानयोर्युष्मदस्मदोर्नैते आदेशा भवन्ति ।

'तव ये शत्रवो राजन् मम तेऽप्यतिशत्रवः ।
तव मित्राणि यानि स्युर्मम मित्राणि तान्यपि ॥१॥
रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता ।
स एव नाथो भगवानस्माकं पापनाशनः ॥ २ ॥

पादादाविति किम् ? ।

'पान्तु वो नरसिंहस्य नखलाङ्गलकोटयः ।
हिरण्यकशिपोर्वक्षःक्षेत्रासृक्कर्दमारुणाः' ॥ १५ ॥

चादिभिश्च[3] । १६ ।

चादिभिरपि योगे नैते आदेशा भवन्ति । 'तव चायं प्रभुर्विष्णुर्मम चायं तथैव च' ॥ १६ ॥

इति षड्लिङ्गप्रकरणम् ।

---

१ अत्रोदाहरणम्—पश्यामीति ॥ त्वा त्वाम् अहं मदालीढं—मदव्याप्तं गर्वयुक्तं पश्यामि । मा मां मदभेदकं मदोच्चारकं पश्येत्यर्थः ।

२ पादः श्लोकचतुर्थांशः, तस्यादौ ते मे वां नौ वस् नस् इत्येते आदेशा न भवन्ति । अत्रोदाहरणं—तवेत्यादि । हे राजन् ये तव शत्रवः ते ममापि अतिशत्रवः । तव यानि मित्राणि तानि ममापि मित्राणीत्यर्थः ।

३ चादिभिरपि सहयोगे च वा ह अह एव एतेषां पञ्चानामव्ययानां

# अथाऽव्ययानि ।

## चादिर्निपातः । १ ।

चादिर्गणो निपातसंज्ञको भवति । च वा ह अह एव एवं नूनं पृथक् विना नाना स्वस्ति अस्ति दोषा मृषा मिथ्या मिथस्

---

योगेऽपि समीपवर्तित्वे सति एते ते मे वां नौ वस् नसरूपा आदेशाः प्रायो न भवन्ति । यथा—

**'तव मम च समागमस्तदासीत्तव मम वा न किमप्यसाध्यमस्ति' । 'तव मम च मह्यकास्ति सख्यं न तव ममेह कचित्कुवेद्वियोगः"॥**

'सदा तवैव भक्तोस्मि' इत्यादि ॥ द्विवचनादावपि प्रयोगवशाच्च ज्ञेयम् ॥

इति युष्मदस्मत्प्रक्रिया ॥

अथ चादीन् निपातानाह—**'चादिर्निपात इति'** । चादिः प्रथमैकवचनान्तम् । निपतत्यनेकेष्वर्थेष्विति निपातः । च वा ह इत्यादि यावत् 'स्वराश्च' इत्येवमादिर्गणो निपातसंज्ञो भवति इत्यर्थः । एते निपाता उच्यन्ते इति यावत् । अथैतेषां किञ्चिद्विवरणं लिख्यते । च—पुनरर्थे समुच्चयादिषु च । वा—विकल्पार्थे उपमानार्थे च । ह अह इति द्वौ खेदार्थौ पादपूरणार्थौ च । अहह इत्यपि खेदे आश्चर्ये च । एव—निश्चयार्थे अवधारणे औपम्ये वा । एवम्—अमुना प्रकारेण अङ्गीकारे च पूर्वोक्तस्मरणे च उपमायां च । नूनं—निश्चये पृथक् भिन्नार्थे । विनाऽभावार्थो वर्जनार्थश्च । नाना—बहुप्रकारवाची । स्वस्ति—कल्याणार्थे । अस्ति सत्तार्थे । दोषा रात्र्यर्थे । मृषा मिथ्या—एतौ द्वावसत्यार्थे । मिथस्—परस्परार्थः । अथ अथो एतौ आनन्तर्यार्थे मङ्गलारम्भयोश्च अर्थान्तरकथने च । ह्यस्शब्दो गतदिनार्थे । श्वस्—आगामिदिनार्थे । उच्चैस्—उच्चत्ववाचः अतिशयार्थवाचकश्च । एवम्—

अथो अथ ह्यस् श्वस् उच्चैस् नीचैस् शनैस् स्वर् अन्तर् प्रातर् पुनर् भूयस् आहोस्वित् उत सह ऋते अन्तरेण अन्तरा नमस् अलम् कृतम् । 'आ-मा-नो-नाः प्रतिषेधे' । ईषत् किल खलु वै आरात् भृशं यत् तत् स्वराश्च । इत्येवमादिर्गणो निपातसंज्ञको भवति ।

---

उच्चकैरपि । एवं नीचैः नीचकैः नीचत्वार्थः हीनत्वार्थश्च । स्वर् स्वर्गार्थः । अन्तर्—मध्ये । प्रातः—प्रभाते । पुनर्भूयस्—एतौ द्वौ पौनःपुन्ये । आहोस्वित्—वितर्के । कुतश्चित्—इत्यपि वितर्के । उत—अथवार्थे । ऋते—विनार्थे । सह—सहार्थे । अन्तरेण—विनार्थे । अन्तरा—मध्यार्थः । नमस्—नमस्कारे । अलं—भूषायां निवारणे च पर्याप्ते सामर्थ्ये च । कृतं—निवारणे पूरणार्थे च । अ मा नो न—एते चत्वारः प्रतिषेधार्थे । ईषत्—स्तोकार्थे इत्यर्थः । किल खलु वै—एते त्रयो निश्चयार्थे स्मरणार्थे च । आरात्—निकटार्थे दूरार्थे च । दूरात्—दूरार्थे च । भृशम्—अत्यर्थे । यत्—यस्मात्कारणात् । तत्—तस्मात्कारणात् । स्वराश्च—अं आ इ ई उ ऊ ऋ ॠ ए ऐ ओ औ एतेऽपि निपाताः । तत्र अ—सम्बोधने निर्भर्त्सने च । आ—वाक्यस्मरणे च । इ—संबोधने । ई—दुःखचिन्तने च । उ—रोषोक्तौ निवारणे च । ऊ—प्रश्ने निश्चये रोषे च । ऋकारलृकारौ क्षोभवाचकौ लोभवाचकौ च । लोभो—दोषवृद्धिः । विश्रामवाचकौ वा । ए—संबोधने । ऐ—आश्चर्ये । ओ—अनुनये । औ-भवत्यर्थे । अं—अङ्गीकारे । अः—भये आश्चर्ये च । इत्यादिर्गणो निपातसंज्ञो भवति । आदिशब्दादन्ये-पि ज्ञेयाः—सह साकं सार्धं सत्रा अमा—एते सहार्थे । कच्चित्—इष्टपरिप्रश्ने । अये—कोमलामन्त्रणे । ननु—निश्चये वितर्के च । नु—वितर्के । नक्तं—रात्रिवाचकं स्यात् । इति—समाप्त्यर्थे । नाम—इति कोमलामन्त्रणे । मन्ये—इति वितर्के विचारणे च । एतेषु च केचिद्वाचकाः केचिद्द्योतकाः । तत्र वाचकाः—पृथगादयः । ते ह्यर्थं वदन्ति ।

द्योतकाश्चादयः । ते किल द्योतयन्त्यतो द्योतका उच्यन्ते । तदुक्तम्—

**'केऽप्येषां द्योतकाः, केऽपि वाचकाः केऽप्यनर्थकाः ।**
**आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः ॥' इति ।**

द्रव्यवचनो नेति ज्ञेयम् । तत्रादिर्गणो विभक्त्यर्थे निपात्यते । तस्मिन्निति तत्र । यस्मिन्निति यत्र । कस्मिन्निति कुत्र । क्व कुह । अस्मिन्निति अत्र । कस्मिन् काले कदा । तस्मिन् काले तदा । यस्मिन् काले यदा । सर्वस्मिन् काले सर्वदा । एकस्मिन् काले एकदा । तेन प्रकारेण तथा । येन प्रकारेण यथा । केन प्रकारेण कथम् । अनेन प्रकारेण इत्थम् । तस्मादिति ततः । एवं कुतः अतः इतः । सार्वविभक्तिकस्तसित्येके । पूर्वस्मिन्निति पुरस्तात् । परस्मिन्निति परेण । ***आहि च दूरे*** । दक्षिणा हि वसन्ति चाण्डालाः । ***किमः सामान्ये चिदादि*** । सर्वविभक्त्यन्तात् किंशब्दा-

---

**तत्रेति** । तत्रादिगणो विभक्त्यर्थे निपात्यते । तत्र सप्तम्यर्थे यथा सप्तम्येकवचने तस्मिन्नित्यर्थे तत्र निपातः । एवं तयोः तेषु तस्यां तयोः तासु एतेष्वपि तत्रेति निपातः । एवं सप्तम्यर्थे । वर्त्तमानात्तच्छब्दात् त्रप्रत्ययः दलोपश्च । एवं सप्तम्यर्थे वर्तमानाद्यच्छब्दात् त्रप्रत्ययो दलोपः । यस्मिन्नित्यस्य यत्र । किम्शब्दात् त्रप्रत्ययः, किमः कुआदेशश्च । एवं सप्तम्यर्थे किम्शब्दात् अप्रत्ययः, कुआदेशे क्व । कस्मिन्नित्यस्य कुत्र कुह क्व । एवं द्विभवद्युष्मदस्मदौ च वर्जयित्वा सर्वादिगणात् सप्तम्या अर्थे 'त्र' इति भवति । सर्वत्र उभयत्र अन्यत्र एकत्र पूर्वत्र परत्रेत्यादि । तस्मिन् काले तदा । यस्मिन्काले यदा । कस्मिन् काले कदा । एकस्मिन् काले एकदा । एवं—सदा सर्वदा अन्यथा । येन प्रकारेण यथा । केन प्रकारेण कथम् । अनेन प्रकारेण इत्थं । सर्वेण प्रकारेण सर्वथा । एवम् अन्यथा इतरथा अपरथा । तस्प्रत्ययान्तानाह—**तस्मादिति** । पञ्चम्यर्थे तस् । तस्मादिति ततः । यस्मादिति यतः । कस्मादित्यर्थे कुतः । अस्मात्यर्थे इतः । अतः ।

दज्ञातानिर्धारणार्थकसामान्येऽर्थे चिच्चनौ भवतः । कश्चित् कौचित् केचित् । कश्चन । क्वचन । *तदधीनकार्त्स्न्ययोर्वा सात्* । राजाधीनं राजसात् । सर्वं भस्म करोति इति भस्मसात् । *ऊर्युररयङ्गीकरणे* ऊरीकृत्य । उररीकृत्य । *सद्यादिः काले निपात्यते* ।

---

एवं ग्रामतः लोकतः सर्वतः ।। **सर्वेति** । एते आचार्या इत्याहुः—तस्प्रत्ययः सर्वविभक्तिषु भवति । सर्वासां विभक्तीनामर्थे भवतीत्यर्थः । स्वमते तु पञ्चम्यर्थे एव । कस्मादिति कुतः । पार्श्वे इति पार्श्वतः । पूर्वस्यामिति पूर्वतः । एवं सर्वतः इत इत्यादयो-वसेयाः । पूर्वस्मिन्निति पुरस्तात् । पूर्वस्मिन् काले देशे च पूर्वस्यां दिशि वेत्यर्थः । तथा च कालापके—'पूर्वशब्दात् दिग्देशकालार्थात्सप्तमीपञ्चमीप्रथमान्तादस्तातिः पूर्वस्य पुर् निपातः अनद्यतने काले' । एवम् अधस्तात् अध इति । एवमुपरिष्टात् उपरि इति । परस्मिन्निति परस्मिन् देशे काले परस्या दिशि वेति परेण । दक्षिणस्यां दिशि दूरे इति—दक्षिणाहि चाण्डाला वसन्ति । दक्षिणस्यां दिशि दूरे वसन्तीत्यर्थः । एवम्—उत्तराहि वसन्ति कौरवाः । उत्तरस्यां दिशि दूरे वसन्तीत्यर्थः ।।

१ **तदधीनेति** । यद्यस्याधीनमायत्तं तत्तदधीनं । कृत्स्नस्य समग्रस्य भावः कार्त्स्न्यं समग्रत्वं, तदधीनं च कार्त्स्न्यं च तदधीनकार्त्स्न्ये तयोः । तत एतयोरर्थे नाम्नः पुरतः सात् प्रत्ययो निपात्यते । राज्ञोऽधीनं राजसात् । सर्वं भस्म भवति इति भस्मसात् । 'तदधीनकार्त्स्न्ययोः' इति सात्प्रत्ययः ।

सात्प्रत्ययस्य षत्वं नेच्छन्ति । यथा—अग्निसात् । २ 'ऊर्युररयङ्गीकरणे' । अङ्गीकरणेऽर्थे ऊरी उररी शब्दौ निपात्येते । ऊरीकृत्य उररीकृत्य । अङ्गीकृत्येत्यर्थः । उरीकृतम् । उररीकृतम् । उररीकरोति । ३ **सद्य इति** । आदिकाले अर्थे कालविशेषे सद्यादिर्निपात्यते । सद्यस्तत्कालम् । अद्य—साम्प्रतदिने । सपदि—शीघ्रम् । अधुना इदानीम्—एतौ वर्तमानक्षणार्थे ।

सद्यः अद्य सपदि अधुना सम्प्रति साम्प्रतम् आशु शीघ्रं झटिति तूर्णं पूर्वेद्युः अन्येद्युः परेद्युः उभयेद्युः । यर्हि तर्हि जोषम् मौनम्—इत्यादि चादिगणः ॥ १ ॥

**प्रादिरुपसर्गः । २ ।**

प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ्

---

अक्षिपक्ष्मावच्छिन्नकालः क्षणः । एवं सम्प्रति साम्प्रतमपि । झटिति शीघ्रम् तूर्णम्—एते त्रय औत्सुक्यार्थाः । पूर्वेद्युरिति गतदिवसार्थवाचकम् । परेद्युर्दिवसान्तरवाचकम् ॥ यर्हि यदा यदि तर्हि तदा कर्हि कदा । आदिशब्दात्—परुत् परारि एषमः अपरेद्यवि अपरेद्युः उत्तरेद्युः उभयेद्युः इत्यादयो ज्ञेयाः ॥

१ **प्रादिरिति** । 'प्रपरापसमन्ववनिर्दुरभिव्यधिसूदतिनिःप्रतिपर्यपयः । उप आङिति विंशतिरेष सखे ! उपसर्गगणः कथितः कविना ।' अयं प्रादिः आविः पर्यवसानो गण उपसर्गसंज्ञकः । तत्र प्रशब्दः प्रकर्षार्थः । यथा 'प्रणम्य' 'प्रवादः' । प्रादिकर्मणि दीर्घे च सामर्थ्ये भृशसम्भवे । वियोगशुद्धिशक्तीच्छाशान्तिपूजाप्रदर्शने ॥ आदिकर्मणि—प्रारब्धं प्रकृतम् । आयामे—प्रलम्बः । सामर्थ्ये—प्रभुः । भृशार्थे—प्रतपति । संभवे—प्रभवति । प्रीणने—प्रतुष्यति । गमने—प्रयाति । इच्छायां—प्रार्थयते । शान्तौ—प्रशान्तः । मुख्ये—प्रवरः । अवलोकने—प्रपश्यति । शुद्धौ—प्रसन्ना आपः । प्रसन्नेन्द्रियः । प्रीतौ—प्रसीदति राजा । पूजायां—प्राञ्जलिः प्रह्वः । तत्परः—पितामहात्परः प्रपितामहः । एवं प्रपौत्रः प्रशिष्य इत्याद्यर्थेषु उपसर्गो ज्ञेयः ।

परा इति विपरीतार्थे पराजयार्थे विमुखार्थे दूरीकरणे च । यथा पराजितः पराभूतः पराकृतः पराङ्मुखः । परावृतः पराक्रमः परामर्शः । अप असत्यार्थविकारवर्जनस्तेनकर्षणादौ । यथा—अपकर्षति अपचरति । अपकृतः ।

नि अधि अपि अति सु उत् अभि प्रति परि उप अन्तर् अविर् । अयं गण उपसर्गसंज्ञकः ॥ २ ॥

अपहरति । सम्—सम्भवसम्यक्प्रकारादौ । यथा—सम्भवति । मिलने—सङ्गच्छति । समवाये—सङ्करः । एवं—सन्धिः सङ्केतः संस्कृतः संशयः संरम्भः संवृतम् । अनु—अनुज्ञापश्चाद्भावसादृश्याभिमुखहीनसामीप्यादीप्सादौ । अनुजानाति अनुवदति अनुगच्छति अनुकरोति अनुहरति । वत्सो मातरमनुधावति । अन्वर्जुनं योद्धारः । अनुमेघम् । अनुगृहम् ॥ अव—अवज्ञालम्बज्ञानशुद्धिव्याप्त्यादौ । अवगणयति । अवजानाति । यष्टिमवष्टभ्य तिष्ठति । अवगतोऽर्थः । अवदानम् अवकीर्णः । निर्—निश्चयनिगमनातिशयनिषेधनिर्णयादौ । निर्णयति निर्गतः निरुपमः निष्पन्नः निश्चयः निर्मक्षिकम् । दुरिति दुष्टे दुःखकष्टाद्यर्थे । दुर्जनः। दुष्करम् । वि इति नानार्थवियोगविदीर्णवैषम्यवैमनस्यविशेषणाद्यर्थे । विविधं विदारितः विकटः विमनाः विराजते । विशेषणादौ यथा—विशिनष्टि विरूपः विलोमः विस्मितः विष्पन्नः विप्रकृष्टः विमुखः विनयः । आङ् इति मर्यादाभिविधीषत्समन्तादाशंसनोपदेशागमादौ । यथा—'आसमुद्रक्षितीशानाम्' 'आजन्मशुद्धानाम्' आगच्छति आरोहति आशास्ते आलभते आलिङ्गति आरभते आदत्ते आसन्नः आशयः।

नि—नितरां निक्षेपणादौ । निपीय निहितं निक्षिपति ।। अधि इति अध्ययनाधीनाधिपत्याधिकाधिष्ठानादौ । यथा—अधीते अधिगुणः अधितिष्ठति अपि—आच्छादनादौ । अपिदधाति । यतः—'अपि सम्भावना प्रश्नशङ्कागर्हासमुच्चये' ।। अति—अतिशयादौ । 'अतिशब्दः प्रशंसार्थो प्रकर्षेलंघनेऽप्यति' । यथा अतिरथः अतितराम् अतिक्रामति अतिशेते ।। सु इति प्रशंसनातिशयसुखशोभनशुभादौ । सुकरः ।। उत्—प्राबल्ये ऊर्ध्वक्रियोत्कर्षादौ । 'उत् प्राबल्ये वियोगे च प्रकाशे चोर्ध्वकर्मणि' । उत्कर्षति । अभि-अभिवादनेच्छारूपेसन्मुखपराभवादौ । यथा अभिवदति अभिगच्छति ॥ प्रति—प्रतिष्ठाप्रतिज्ञासादृश्यग्रहणाभिमुख्यसमीपहिंसाप्रतिषेधादौ ।

**प्राग्धातोः । ३ ।**

उपसर्गा धातोः प्राक् प्रयोक्तव्याः ।। ३ ।।

**तद्व्ययम् । ४ ।**

तदिदं चादिरूपमव्ययसंज्ञं भवति ।। ४ ।।

**क्त्वाद्यन्तं च । ५ ।**

क्त्वा क्यप् तुम् णम् च्वि डा धा वतु आम् कृत्वस् शस् तस् इत्येतदन्तमव्ययं स्यात् ।। ५ ।।

**अव्ययाद्विभक्तेर्लुक् । ६ ।**

अव्ययात्परस्या विभक्तेर्लुक् भवति न तु शब्दनिर्देशे । अव्ययानाञ्च न लिङ्गादिनियमः । उक्तं हि—"**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्** । उक्तान्यव्ययान्यलिङ्गानि ।। ६ ।।

**इत्यव्ययानि ।**

---

यथा प्रतितिष्ठति । परि—सामस्त्यदोषकथालिङ्गनपरिभवादौ । परिभवति । उप—इति समीपव्याप्तोपरमप्रतिक्रियाध्ययनपुष्ट्यादौ । उपतिष्ठते ।। श्रत्—श्रद्धायामास्तिक्यबुद्धौ च । अन्तर्मध्ये । आविः—प्राकट्ये । आविः करोति ।

अयं प्रादिर्गण उपसर्गसंज्ञकः । एतेऽपि बाधकानुवर्तकविशेषनिरर्थकभेदाच्चतुर्धा । यतः—

'धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते ।
तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते ॥

बाधते यथा—पराजयते । 'उपसर्गेण धात्वर्थः' इति वचनात् ।। तं धात्वर्थमनुवर्तते । यथा—विजयते ।। विशिनष्टि—विशेषयति । यथा—प्रभवति । निरर्थकस्तु अशोभमानार्थकः । यथा—प्रलोकते ।।

# अथ स्त्रीप्रत्ययाः ।

अधुना लिङ्गविशेषविजिज्ञापयिषया स्त्रीप्रत्ययाः प्रस्तूयन्ते ।

**आबतः स्त्रियाम् । १ ।**

अकारान्तान्नाम्नः स्त्रियां वर्त्तमानादाप्प्रत्ययो भवति । जाया माया मधा श्रद्धा धारेत्यादि । ***अजादेश्चाप् वक्तव्यः*** । अजा एडका कोकिला बाला वत्सा शूद्रा गणिका ॥ १ ॥

---

१ लिङ्गेषु स्त्रीपुंसनपुंसकेषु विशेषस्यस्त्रीलिङ्गस्य । विशेषणेन ज्ञापयितुमिच्छया स्त्र्यधिकारविहिताः प्रत्ययाः स्त्रीप्रत्ययाः । यद्वशेन लोके 'स्त्रीय'मिति प्रत्ययः स धर्मः स्त्रीत्वम् । स च गोत्वादिवत्सामान्यविशेषः स्तनकेशाद्यभिव्यङ्ग्यः । तदुक्तम् ।

स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादयः ।
तदुपव्यञ्जना जातिर्गुणावस्था गुणास्तथा ॥
शब्दोपजनितोऽर्थात्मा शब्दसंस्कार इत्यपि ।
लिङ्गानां लिङ्गतत्त्वज्ञैर्विकल्पाः सप्त दर्शिताः ॥' इति ।

तथा—

'इयमयमिद'मिति येषु व्यपदेशो दृश्यते लोके ।
स्त्रीपुन्नपुंसकानि प्रोच्यन्ते तानि लोकेन ॥
गोत्वाश्वत्वाश्रयैर्यद्वत्सामान्यमुपलक्ष्यते ।
व्यञ्जकैरनुवृत्तत्वात्स्त्रीत्वं पुंस्त्वादिकं तथा ॥
ततो व्यञ्जकवैचित्र्याद्यनात्र स्त्रीत्वमेव हि ।
व्यज्यते न तु पुंस्त्वादिः सोऽर्थः स्त्रीत्यभिधीयते ॥"इत्यादि॥

१ अजादेरिति । जातेरयोपधादित्यादिविशेषविधानादीपि प्राप्ते बाला वत्सा कन्यकेत्यादौ च प्रथमवयोवाचित्वादीपि प्राप्ते वचनम् ।

**काप्यतः । २ ।**

कापि परे पूर्वस्याकारस्य इकारो भवति । कारिका पाठिका कालिका तालिका । **वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपश्चैव हसान्तानां यथा वाचा निशा दिशा ॥१॥** अवगाहः वगाहः । अपिधानं पिधानम् ॥ २ ॥

**ह्रस्वो वा । ३ ।**

स्त्रियां कापि परे तकारादौ च पूर्वस्य ह्रस्वो वा भवति । वेणिका वेणीका । नदिका नदीका । श्रेयसितरा श्रेयसीतरा । श्रेयसितमा श्रेयसीतमा । नौकादौ ह्रस्वो न भवति । वाग्रहणादियं विवक्षा । निश्चयेन पतन्त्यनेकेष्वर्थेष्विति व्युत्पत्तेर्निपातानामनेकार्थत्वात् ॥ ३ ॥

१ **कापीति** । ककारेणाव्यवहित आप् काप्, तस्मिन् कापि । ततश्च बह्वः परिव्राजका यस्यां सा बहुपरिव्राजकेत्यत्रापः स्यादिपरत्वेन तेन व्यवधानाच्च । आप्प्रत्यये साहचर्यात्ककारोऽपि प्रत्ययसम्बन्ध्येव बोध्यः । एवं च शक्नोतीति शक्लृशकावित्यादेः पचाद्यचि आप्प्रत्यये च 'शाके' त्यादौ न । 'ह्रस्वो वे'त्यतो वाऽनुकर्षणान्ममेयं मामिकेत्यत्रैतदर्थे ममकादेशे आपि च प्रत्ययकाराभावेऽपि भवति । तथा नरान्कायति शब्दायते नरिकेत्यत्रापि ।

२ **कापीति** । 'पूर्वतः तरादा'विति वाशब्दव्यवस्थयोक्तम् । ते च तरतमरूपकल्पादयः । बहुव्रीहौ कप्रत्यये वा । सुसोमपाकः—सुसोमपकः । नौका । रैका । ग्लौकेत्यादौ च नावि द्व्यक्षरेत्यादौ पुंवद्भावोऽपीत्यादि वाशब्दादवसेयम् । वाशब्दस्य विकल्पार्थत्वेऽपि निपातसंज्ञा बह्वर्थत्वादनेकार्थत्वमित्याहुः ।

**ऋन्नेभ्यो ङीप् ।४।**

नकारान्तादृकारान्तादण्णन्ताच्च स्त्रियामीप् प्रत्ययो भवति । दण्डिनी, दन्तिनी, करिणी, मालिनी । *** ईपि राज्ञोऽल्लोपो वक्तव्यः *** । राज्ञी, शुनी, कर्त्री, हर्त्री, औपगवी ॥ ४ ॥

**यस्य लोपः । ५ ।**

इश्च अश्च यस्तस्य लोपो भवति स्वरे यकारे च परे ॥ ५ ॥

**षृदितः । ६ ।**

षकारटकारउकारऋकारानुबन्धात् स्त्रियामीप् प्रत्ययो भवति । ष्-वराकी । ट्-कुरुचरी । उ-गोमती ॥ ६ ॥

---

१ **ऋण इति** । न् च ऋ च अण् च एतेषां समाहारः ऋण्, तस्मात् । ऋणः अत्र 'नो वे'त्यतो मण्डूकप्लुत्या वानुवृत्तेः स्वस्रादिभ्यः संख्यावाचीकारान्तेभ्यश्च न । 'आवतः स्त्रिया'मित्यत्रापि तत एवानुवृत्तेः । 'पञ्चस्त्रिय' इत्यादौ नलोपे नकारान्तत्वेनापि प्राप्ते पि नकारान्तसङ्ख्यावाचित्वान्नेत्यादि व्यवस्थापनीयम् । **ईपि राज्ञ इति** । राज्ञाति राजन्शब्दस्य नान्तस्य वकारमकारान्तसंयोगादुत्तरस्य चेत्यर्थो विवक्षितः । द्विदाम्नी भूरिदाम्नीत्यादिसिद्धिः ॥

२ औपगवीत्यत्राकारलोपार्थमाह- **यस्येति** । इश्च अश्च यं, 'णितो वे'-त्यतो वा नुवृत्त्या स्त्रीप्रत्ययसमासान्ततद्धितप्रत्ययसम्बन्धियकारस्वरेष्वेव, न विभक्त्यादिस्वरे । अतो वायुः दध्यत्रेत्यादाव-सङ्ग इति व्यवस्था । षृदितः । ष् च ट् च उश्च ऋ च षृटृ, तदित् यस्य तस्मात् । अत्रापि पूर्ववद्वानुवृत्ते-

**अप्ययोरान्नित्यम् । ७ ।**

अप्प्रत्ययप्रत्ययसम्बन्धिनोऽवर्णात् परस्य शतुर्नित्यं नुम् इकारे इपि च परे । यथा-पचन्ती पठन्ती इत्यादि ॥ ७ ॥

**नदादेः । ८ ।**

नदादेर्गणात् स्त्रियामाप् प्रत्ययो भवति । नदी । गौरी । गौतमी ॥ ८ ॥

**इन्द्रादेरानीप् । ९ ।**

इन्द्रादेर्गणादानीप् प्रत्ययो भवति । इन्द्राणी । भवानी । शर्वाणी ॥ ९ ॥

**ईप् समाहारे गुणश्च । १० ।**

समाहारार्थे ईप् प्रत्ययो भवति गुणश्च । त्रयी । पञ्चकुली ॥ १० ॥

**पुंयोगे च । ११ ।**

अकारान्तात् पुंयोगे इप्प्रत्ययो भवति । शूद्रस्य स्त्री शूद्री । गणकी ॥ ११ ॥

**जातेरयोपधात् । १२ ।**

जातिवाचिनोऽयकारोपधादकारान्तात् स्त्रियामीप् प्रत्ययो भवति । मेषी । सूकरी । हंसी । कुक्कुटी । ब्राह्मणी । अयकारो-

---

त्रपूष् लज्जायामित्यादेः पचाद्यचि 'त्रपे'त्यादौ षित्त्वेऽपि न । 'स्तनन्धयी'त्यत्र घेटस्तु स्यादित्यादि व्यवस्थापनीयम् ॥

१ **जातिवाचिन इति** । जातिलक्षणं चोक्तम्-"आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥ इति । गृह्यतेऽनेनेति ग्रहणम् । आकृतिः—संस्थानं ग्रहणं ग्राहकं यस्याः

पधादिति किम्। क्षत्रिया । वैश्या । *प्रथमवयोवाचिनोऽत्र ईप् वक्तव्यः । कुमारी । किशोरी । कलभी । प्रथमग्रहणात् वृद्धा, स्थविरा इत्यादौ न ईप् । अद्ग्रहणात् शिशुरित्यत्रापि न १२

---

सा अवयवविशेषव्यञ्जयेत्यर्थः । एतेन गोत्वादिजातिरुक्ता । ब्राह्मणाद्याकृतेः क्षत्रियादिपु सम्भवात्तत्सङ्ग्रहायाह—**लिङ्गानां चनि** । या सर्वलिङ्गानि न भजतीत्यर्थः । ब्राह्मणः ब्राह्मणीत्यादेर्द्विलिङ्गत्वात् । एतच्चाधिकसङ्ग्रहार्थमिति । तटादेः सर्वलिङ्गत्वेऽपि पूर्वेणैवाऽस्य जातित्वम् । देवदत्तादेरसर्वलिङ्गत्वेनातिव्याप्तावाह—**सकृदाख्याततेति** । सकृदुपदेशनिश्चेयेत्यर्थः । एतेन निश्चयत्वमेकत्वं प्रत्येकपरिसमाप्तत्वं चोक्तम् । ततश्चैकस्मिन् पिण्डे उपदिष्टा तस्मिन्नष्टेऽपि पिण्डान्तरे उपलम्भात् । देवदत्तादेश्च संज्ञाशब्दत्वेना तथाभावान्नातिव्याप्तिरिति भावः । नन्वेवमपत्यप्रत्ययान्तस्य सर्वलिङ्गेप्याकृतिग्रहणाऽभावादव्याप्तिः स्यादत आह **गोत्रं च चरणैः सहेति** । 'गोत्र'-मिति पूर्वाचार्याणामपत्यसंज्ञा । चरणानां वेदशाखाध्ययनक्रियासम्बन्धात् क्रियाशब्दानां जातित्वार्थमुक्तिः । अत्र जातेरिति योगविभागात् गवयहयमुकयमत्स्यमनुष्येभ्यो योपधेभ्यो निषेधो न । गवयात्यादि । 'नो वे'त्यतो मण्डूकप्लुत्या वानुवृत्तेर्मक्षिका बलाकेत्यादौ स्त्रीमात्रविषयत्वाज्जातिवाचिनो न॥

१ **प्रथमवयोवाचिन इति** । कालकृता शरीरावस्था यौवनादिर्वयः । तत्र यद्यपि केचित्कौमारयौवनमध्यत्ववृद्धत्वानि चत्वार्याहुः । अन्ये तु कौमारयौवनस्थाविरत्वानि त्रीणीच्छन्ति । अपरे "आषोडशाद्भवेद्बालो यावत्क्षीरान्नवर्तकः मध्यमः सप्ततिर्यावत्परतो वृद्ध उच्यते ॥" इत्यन्यथा त्रीण्याहुः । तथापि यावत्यो वृद्धिमत्योऽवस्थास्ताः सर्वा एकीकृत्य प्रथमं वयः । याश्चापचयवत्यस्ता राशीकृत्य द्वितीयमिति । द्विवयःपक्षोऽत्राभिप्रेतः । स चोक्तः । "वर्द्धतां यावदनेन वर्धितस्य पश्चादपायेन युज्यताम् ।" इति । एतदेवाभिप्रेत्याह—**वृद्धेति** ।

स्वाङ्गाच्च । १३ ।

स्वाङ्गवाचिनो वा स्त्रियामीप् प्रत्ययो भवति । सुमुखी । मृगाक्षी । तन्वङ्गी । वाग्रहणात् पद्मवदना, कमलनयना इत्यादौ ईप् न भवति । **कृदिकारादक्तेरीप् वा वक्तव्यः*** । अङ्गुलिः अङ्गुली । धूलिः धूली । आजिः आजी । अक्तेरिति विशेषणात् कृतिः भूतिरित्यादौ न ॥ १३ ॥

१ **स्वाङ्गादिति** । स्वाङ्गस्वरूपं चोक्तम्—"अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम् ॥" इति । शरीराभ्यन्तरचारी वायुः प्राणः, सोऽस्यास्तीति प्राणी । तत्र तिष्ठतीति प्राणिस्थं-तत्स्वाङ्गम् । एवं स्वेदस्यापि प्राणिस्थत्वात्स्वाङ्गता स्यात्त-त्राह— **अद्रवमिति** । तस्य तु द्रवत्वान्न । एवमपि ज्ञानस्य प्राणिस्थत्वाद-द्रवत्वाच्च स्वाङ्गता स्यादत आह—**मूर्त्तिमदिति** । असर्वगतद्रव्यपरिमाणं काठिन्यादि स्पर्शविशेषो वा मूर्तिर्यस्यास्तीति मूर्त्तिमत् । ज्ञानस्यात्मगुणत्वेन परिमाणलक्षणस्य गुणस्पर्शलक्षस्य वा तत्रानङ्गाकारादमूर्तिमत्त्वं ज्ञानस्ये-त्यर्थः । एवमपि शोफादेश्चोक्तलक्षणवत्स्वाङ्गता स्यादत आह—**अविकार-जमिति** । विकारो वातादिवैषम्यं ततो न जातम् । शोफादिस्तु विकारजः । रथ्यादिपतितकेशादेः स्वाङ्गतासङ्ग्रहार्थमाह- **अतत्स्थं तत्र दृष्टं चेति** । तत्र प्राणिनि न दृष्टम् । अन्यदा तत्राऽवर्तमानमपि स्वाङ्गम् । एवमपि-प्रतिमाद्यवयवानां मुखादीनां प्राणिस्थेनाऽविशेषादिना सम्बन्धः । तथा यत्र-प्राणिनापि सम्बद्धं स्यात्तदपि तथेत्यर्थः । प्राणिमुखादिसदृशमप्राणिमुखा-द्यपि स्वाङ्गमिति भावः । उदाहरणं तु-सुकेशी-सुकेशा वा रथ्या । सुस्तनी—सुस्तना वा प्रतिमा । प्रत्युदाहरणं तु क्रमेण—सुमुखा शाला । बहुस्वेदा । सुज्ञाना । सुशोफेत्यादि । **कृदिकारादिति** । अक्तेरित्यत्र क्तिशब्देन क्त्यर्थो गृह्यते । अक्त्यर्थादित्यर्थः । ततश्च अकरणिः । अहरणिरित्यादौ न ।

**ऐ च मन्वादेः । १४ ।**

मन्वादेर्गणात् स्त्रियामीप् प्रत्ययो भवति ऐकारादेशश्च । मनायी । वृषाकपायी । चकारात् "मनोरौ वा" । मनावी मनुः ॥१४॥

**पत्न्यादयः । १५ ।**

पत्न्यादय ईप्प्रत्यान्ता निपात्यन्ते । ***समानैकवीरपिण्डपुत्रभ्रातृदासेभ्यो बहुव्रीहौ पत्युर्नादेश इप् च*** । सपत्नी । एकपत्नी । वीरपत्नी । पिण्डपत्नीत्यादि । अन्तर्वत्नी । सखी । अशिश्वी । अर्धजरती । युवती । प्राची । प्रतीची । उदीची । समीची । दारशब्दो नित्यं बहुवचनान्तः पुंल्लिङ्गः । दाराः । हे दाराः । दारान् । दारैः । दारेभ्यः २ । दाराणाम् । दारेषु ॥१५॥

---

१ **पत्न्यादय इति** । 'स्वाङ्गाद्दे'त्यतो वानुवृत्तेर्व्यवस्थितविभाषाश्रयणात् क्वचिदर्थविशेषे क्वचिच्च वेति व्यवस्थाऽनयाऽयम् । तत्र पत्नीति यज्ञसंयोग एव । अन्यत्र गवां पतिः स्त्री वृषलपत्नीत्युपमानात् । विद्यमानपूर्वस्य तु वा । दृढपत्नी-दृढपतिः । सपत्न्यादिषु नित्यम्—सपत्नी । एकपत्नी । अन्तर्वत्नी गर्भयोगे एव । अन्यत्राऽन्तर्वती शाला । तथा भर्तृयोगे—पतिपत्नी । अन्यत्र पतिमती नगरी । तथा—सखी सवयस्था, सख्युर्माऽपि । न शिशुर्यस्याः सा अशिश्वी । अर्द्धजरती । युवती । प्राची । मरुती । मानुषी । सूरी । अगस्ती । असितपलितयोरसिकी । पलिक्नी । एता—एनी । जानपदी । कुण्डी अमत्रं चेत् । कुण्डा अन्या । गोणी आवपनं चेत् । गोणाऽन्या । स्थली अकृत्रिमा चेत् । स्थलाऽन्या । भाजी पक्वा चेत् । भाजाऽन्या । नागी स्थूला चेत् । नागाऽन्या । काली वर्णा चेत् । कालाऽन्या । नीली अनाच्छादनं चेत् । नीलाऽन्या । कुशी अयोविकारश्चेत् । कुशाऽन्या । कामुकी मैथुनेच्छावती चेत् । कामुका अन्या । कबरी केशवे-

**वौर्गुणात् । १६ ।**

ऊकारान्ताद् गुणवाचिनो वा स्त्रियामीप्प्रत्ययो भवति । पट्वी पटुः । मृद्वी मृदुः । तन्वी तनुः । ऋज्वी ऋजुः ॥ १६ ॥

**उत ऊः । १७ ।**

उकारान्तान्मनुष्यजातेः स्त्रियामूप्रत्ययो वा भवति । पङ्गूः पङ्गुः । वामोरूः वामोरुः ॥ १७ ॥

**युनस्तिः । १८ ।**

'शृधौ' युवतिः । एभ्यो नामत्वात् स्यादयः । आबन्ताद् 'आपः' इति ईबन्तात् हसे.प सेर्लोपः' इति सिलोपः । ईबन्तात् 'हसे पः सेर्लोपः' । पूर्ववत् प्रक्रिया ॥ १८ ॥

**इति स्त्रीप्रत्ययाः ।**

युवन्शब्दात् स्त्रियां तिप्रत्ययो भवति । 'नाम्नो नो लोप-

---

शश्चेत् । कबरा .न्शा । ओषधौ प्राणिनि च नीली । संज्ञायां वा । नीली—नीला । शोणा-शाणेत्यादयो विहितलक्षणाः पत्न्यादौ द्रष्टव्याः ॥

१ **वौरिति** । वा-ओः—वौः । गुणशब्देन मतुप उपादानादभेदोपचाराद्वागुणवद्वाचको गृह्यते । वाशब्देन व्यवस्थैव । खरुसंयागापधान्न । खरुः पतिंवरा कन्या । पाण्डुः । गुणलक्षणं चोक्तम्—"सत्वे निविशतेपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः ।" इति । सत्त्वं द्रव्यम् ।

**उत इति** । अत्रापि पूर्वतो वाऽनुवृत्त्यैव,—धेनुः रज्जुरित्यादौ न । यद्यपि ह्रस्वोकारविधानेऽपि दीर्घैकादेशाद्दीर्घश्रवणमुपपद्यते तथापि दीर्घविधानसामर्थ्यात्—ब्रह्मबन्धूः । जीवबन्धूरित्यादौ समासान्तकप्रत्ययाऽभावार्थमित्यनुसन्धेयम् ॥

२ **युनस्तिरिति** । युवन्शब्दात्तिप्रत्ययो भवति । ईपोऽपवादः । नलोपः । युवतिः ॥ इति स्त्रीप्रत्ययाः ।

# अथ विभक्त्यर्थौ निरूप्यन्ते ।

## लिङ्गार्थे प्रथमा । १ ।

धातुप्रत्ययातिरिक्तमर्थवच्छब्दरूपं लिङ्गम्, तस्यैवार्थे सन्मात्र प्रथमा विभक्तिर्भवति । लिङ्गादयोऽपि प्रथमार्था इति केचित् । आदिशब्दात् लिङ्गवचनपरिमाणमात्रेऽपि प्रथमा । तत्सद्ब्रह्म ।

---

१ लिङ्गविशेषप्रतिपादकप्रत्ययान्निरूप्य पूर्वोक्तस्यादिप्रत्ययनियामकप्रकरणमत्रसरसङ्गत्या प्रारिप्सुः प्रतिजानीते—**अथेति** । विभक्तीनां द्योत्यो वाच्यो वाऽर्थः विभक्त्यर्थः । स च प्रातिपदिकार्थपक्षे द्योत्यश्चिपक्षे वाच्यः । येषु येष्वर्थेषु या या विभक्तयो भवन्ति ते विभक्त्यर्था उच्यन्ते इति भावः । एकवचनं जात्यभिप्रायेण । तत्र प्रथमोद्दिष्टप्रथमार्थमाह—**लिङ्गार्थे इति** । धातुविभक्तिवर्ज्जमर्थवल्लिङ्गमिति कोशादिषु लिङ्गशब्देन नामाभिधानान्नाम-लक्षणेनैव लिङ्गलक्षणमाह—**धातुप्रत्ययवर्जमित्यादि** । प्रत्ययशब्देनात्र प्रत्ययविशेषा विभक्तिरूपो लक्ष्यते । नामलक्षणे लिङ्गलक्षणे च विभक्तिवर्ज-नस्याभिधानात् । धातुवर्जमिति तु सम्भवदभिप्रायं । विचारविशेषश्च नाम-लक्षणोक्तोऽवसेयः । **सन्मात्र इति** । शब्दप्रवृत्त्युपलक्षणम् । यत्रार्थान्तरा-नपेक्षया शब्दप्रवृत्तिः स सर्वोऽपि लिङ्गमित्यर्थः । पुंस्त्रीनपुंसकलिङ्गादि तु तत्र नान्तरीयकत्वाल्लिङ्गार्थ एवाभिहितकारकार्थः प्रातिपदिकार्थः संपद्यत इति । तत्रापि लिङ्गार्थे प्रथमा । लिङ्गार्थस्य सर्वत्रानुस्यूतत्वेऽपि तत्र तत्र कर्माद्यर्थविशेषविवक्षायां द्वितीयादिविशेषविधानात्सामान्यविहितप्रथमाया बाधान्नातिप्रसङ्गः ॥

**लिङ्गादयोऽपीति । केचित्**—पाणिनीयाः । लिङ्गं स्त्रीपुन्नपुंसक-शब्दवाच्यम् । क्रमादपचयोपचयसाम्येष्विति रूपो वस्तुधर्मः ।

परिमाणं—खारी द्रोण आढकमित्यादि शब्दवाच्यम् । परितः सर्वतो मानं दारुलोहादिमयं पात्रम् । उन्मानं प्रमाणवचनं एकत्वद्वित्वबहुत्वानि । एते प्रथमाया अर्थाः । एष्वर्थेष्वपि प्रथमा भवतीत्यर्थः । उदाहरति—

'रविरिव राजते राजा राज्ञात्कुमारी रोरुद्यते ।
दोधूयते ध्रुवं भूपालः प्रागास्तां रामलक्ष्मणौ ॥१॥
प्रथमान्तो यदा कर्ता कर्मणि द्वितीया तदा ।
यदा कर्ता तृतीयान्तः कर्मणि प्रथमा तदा ॥ २ ॥
मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ३॥
कुमाराः शेरते स्वैरं रोरूयन्ते च नारकाः ।
जेगीयन्ते च गीतज्ञा म्रियन्ते रुजार्दिताः' ॥ ४ ॥

**आमन्त्रणे च । २ ।**

आमन्त्रणमभिमुखीकरणम्, तस्मिन्नर्थे प्रथमा विभक्तिर्भवति । "मां समुद्धर गोविन्द प्रसीद परमेश्वर । कुमारौ स्वैरमासाथां क्षमध्वं भो तपस्विनः ?" ॥ २ ॥

**भोसः । ३ ।**

भोस् भगोस् अघोस् एते शब्दा निपात्यन्ते विधिविषये ।
"क्षमस्व भो गुरो राध्य भगोस्तुभ्यं नमः सदा ।
अधीष्व भो महाप्राज्ञ घातयाऽघोः स्वघस्मरम् ।" ॥३॥

**इति प्रथमा**

---

तादित्यादि ।

१ भगो इति । भगोस्तुभ्यं नमोऽस्तु ते इत्यत्र 'अस्तुते' इति च्छेदः । न स्तौतीत्यस्तुत्, तस्मै अस्तुते । परस्य स्तव्यस्याऽभावादविद्यमानस्तव्या येत्यर्थः । अथवा— असद्गुणारोपणं गुणवत्तया ज्ञापनं वा स्तुतिः । तत्र

**शेषाः कार्ये । ४ ।**

कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ सम्बन्धाऽऽधारभावयोः शेषा विभक्तयो द्वितीयाद्या एष्वर्थेषु भवन्ति । ( **कार्ये कर्मकारके उत्पाद्य आप्ये संस्कार्ये विकार्ये च द्वितीया विभक्तिर्भवति** ) ।

**"कर्ता कर्म च करणं सम्प्रदानं तथैव च ।**
**अपादानाधिकरणमित्याहुः कारकाणि षट् ॥ १ ॥**
**कटं करोति कारुको रूपं पश्यति चाक्षुषः ।**

---

भगवद्गुणानामनन्तत्वात्तेषामज्ञानात्तद्विशिष्टवचनाऽसम्भवादविद्यमाना स्तुतिर्यस्य तत्संबोधनं हे अस्तुत् । स्तुतावसामर्थ्यात्केवलं तुभ्यं नम इत्यर्थः ।

यद्वा—"अः केशवे विरिञ्चे च" इत्यभिधानात् एन ब्रह्मणा स्तुतिर्यस्य स तथा । सर्वसेव्यविरिञ्चिस्तव्य इत्यर्थः । हे अघो — अघवन् । स्वस्य घस्मरं—नाशकं पापं घातयत्यर्थः ॥

१ **उत्पाद्य इत्यादि** । तत्र यदसज्जायते तदुत्पाद्यम् । यत्र चोत्पाद्यविकार्य्यसम्बन्धिनो विशेषाः प्रत्यक्षेणानुमानेन वा न प्रतीयन्ते केवलं प्राप्यते तदाप्यम् । गुणान्तराधानेन व्यपदेशान्तरनिमित्तं संस्कार्यम् । प्रकृत्युच्छेदेनावस्थान्तरत्वमापाद्यं विकार्य्यम् । प्रकृत्यनुच्छेदतदुच्छेदाभ्यां संस्कार्यविकार्ययोर्भेदो न वास्तवः । अत एव त्रैविध्यमुक्तं भर्तृहरिणा—

**"निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् ।**
**तत्रेप्सिततमं कर्म्म चतुर्द्धाऽन्यत्तु कल्पितम् ॥**
**तथा सज्जायते पूर्वंजन्मना यत्प्रकाशते ।**
**तन्निर्वर्त्यं विकार्यं च कर्म्म द्वेधा व्यवस्थितम् ॥**
**प्रकृत्युच्छेदसम्भूतं किञ्चित्काष्ठादिभस्मवत् ।**
**किंचिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥**

**राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः ॥ २ ॥**
**अभिसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।**
**द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ ३ ॥"**

अभितो ग्रामं नदी वहति । सर्वतो ग्रामं वनानि सन्ति । धिग्देवदत्तम् । उपर्युपरि ग्रामं मेघाः पतन्ति । अधोऽधो ग्रामं शलभाः पतन्ति । अध्यधि ग्रामं मृगाश्चरन्ति । ***समया-निकषा-हा-प्रति-योगेऽपि*** । समया ग्रामम् । निकषा ग्रामम् । अनु ग्रामम् । प्रति ग्रामम् ॥ ४ ॥

**कालाध्वनोर्नैरन्तर्येऽपि । ५ ।**

कालाध्वनोर्नैरन्तर्ये द्वितीया विभक्तिर्भवति । मासमधीते । क्रोशं पर्वतः । नैरन्तर्याभावे—मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ॥ ५ ॥

## इति द्वितीया ॥

---

क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥"

अनीप्सितं च द्विधोक्तम्—

"औदासीन्येन यत्प्राप्ये यच्चात्कर्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥' इति ।

संज्ञान्तरैरनाख्यातम्—अपादानादिकारकविशेषैरकथितमित्यर्थः । अन्यपूर्वकम्—"दिवः कर्म च" इत्यादिलक्षणम् । तदेवं सप्तविधं कर्म्म ।

१ **कालाध्वनोरिति** । कालाध्वार्थनैरन्तर्ये अत्यन्तसंयोगेऽर्थे द्वितीयेत्यर्थः । नैरन्तर्यं किम् ? । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ।

**[1]कर्तरि प्रधाने क्रियाश्रये साधके च । ६ ।**

क्रियासिद्ध्युपकारके करणेऽर्थे च तृतीया विभक्तिर्भवति।

**"भिन्नः शरेण रामेण रावणो लोकरावणः ।**
**कराग्रेण विदीर्णोऽपि वानरैर्युद्ध्यते पुनः" ॥ १ ॥**

इति तृतीया ।

**दा[2]नपात्रे चतुर्थी । ७ ।**

दानपात्रे सम्प्रदानकारके चतुर्थी भवति । सम्यक्श्रेयोबुद्ध्या

---

१ 'कर्तृसाधनयोः' इति पदं व्याचष्टे— **कर्त्तरीत्यादि** । तत्र तावत्कर्ता द्विविधः—स्वतन्त्रः प्रयोजकश्च । स्वतन्त्रोऽभिहितानभिहितभेदात् द्विविधः । प्रयोजकोऽपि प्रेषकोऽध्येषक आनुकूल्यभागी चेति त्रिविधः । तत्र प्रभुत्वेन प्रयोजयन्प्रेषकः । यथा—शिष्येण कारयति । हीनः प्रयोजयन्नध्येषकः । यथा—गुरुं भोजयति । यस्तु प्रभुत्वहीनत्वाभावेनानुकूल्यमात्रेण योजयति स आनुकूल्यभागी । यथा—आनन्दयति पितरं सत्पुत्रः । एवं पञ्चविधः कर्ता । तत्राभिहिते प्रथमाभिधानादनभिहिते कर्तरि तृतीया । तत्र कर्तृलक्षणमाह—**प्रधाने क्रियाश्रय इति** । क्रियाश्रयः कर्तेत्युक्ते कर्मादीनामपि तथात्वादतिप्रसङ्गः स्यादत उक्तं—**प्रधान इति** । प्रधानत्वं चेतरकारकाऽप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वम् । यथा 'देवदत्तः काष्ठैः स्थाल्यामोदनं पचति' । एतच्च देवदत्त आस्ते शेते इत्यादौ तत्प्रयोज्यमानां कर्मादीनामभावादव्याप्तमिति धातूक्तक्रियात्वं प्रधानत्वमवसेयम् । यदीयो व्यापारो धातुनोच्यते स कर्तेत्यर्थः । इति प्रसादकृतः ।

२ दानपात्र इत्येतद्व्याख्यां कुरुते—**सम्प्रदानकारके इति** । दानं नाम पूजानुग्रहकामनया स्वस्वत्वपरित्यागेन परस्वत्वापादानं तस्य पात्रम् ।

**न विद्यया केवलया तपसा वापि पात्रता ।**
**यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते ॥**

यत् प्रदीयते तत् सम्प्रदानम् ।

**ददाति दण्डं पुरुषो महीपतेर्न चानिभक्त्या न च दानकाम्यया**
**यद् दीयते वासनया सुपात्रे तत्संप्रदानं कथितं मुनीन्द्रैः॥१॥**

वेदविदे गां ददाति । अन्यत्र—राज्ञो दण्डं ददाति । रजकस्य वस्त्रं ददाति ॥ ७ ॥

इति चतुर्थी ।

**विश्लेषाऽवधौ पञ्चमी । ८ ।**

विश्लेषो विभागस्तत्र योऽवधिर्ध्रुवतयाऽचलतया वा विवक्षितस्तत्रापादाने पञ्चमी । धावतोऽश्वादपतत् । भूभृतोऽवतरति गङ्गा ॥८॥

इति पञ्चमी ।

---

इत्याद्युक्तं तत्सम्प्रदानकारकमित्यर्थः । तथा चोक्तम्—

"सम्प्रदानं तदेव स्यात्पूजानुग्रहकाम्यया ।
दीयमानेन संयोगात्स्वामित्वं लभते यदि ॥" इति ।

तच्च त्रिविधम्—अनिराकर्तृ प्रेरकम् अनुमन्तृ चेति । तत्राऽनिराकर्तृयथा—आदित्यायार्घं ददाति । प्रेरकम्—विप्राय गां ददाति । मह्यं गां देहीति प्रेरितो ददातीत्यर्थः । अनुमन्तृ—गुरवे गां ददाति । गुरुर्हि न प्रार्थयते दीयमानां च तामनुमन्यते भद्रं कृतमिति । तदुक्तं भर्तृहरिणा—

"अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम् ॥" इति ।

१ विश्लेषो विभाग इति । अपादानं च द्विविधम्—

"अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
ध्रुवमेव तदावेशात्तदपादानमुच्यते ॥" इति ।

तच्च त्रिविधोक्तम्—

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।
अपेक्षितक्रियाकं च त्रिधाऽपादानमुच्यते ॥ इति ।

**सम्बन्धे[1] षष्ठी ॥ ९ ॥**

सम्बन्धिनोर्मध्ये योऽप्रधानस्तत्र षष्ठी ।

**भेद्यकभेदकयोः श्लिष्टः सम्बन्धोऽन्योन्यमुच्यते ।**
**द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥ १ ॥**
**भेद्यं विशेष्यमित्याहुर्भेदकं च विशेषणम् ।**
**प्रधानं च विशेष्यं स्यादप्रधानं विशेषणम् ॥ २ ॥'**

क्रियातः परस्परापेक्षारूपः सम्बन्धः ।

**"राज्ञः स पुरुषो ज्ञेयः पित्रोरेतत् प्रपूजनम् ।**
**गुरूणां वचनं पथ्यं कवीनां रसवद्वचः ॥३॥" ॥९॥**

**इति षष्ठी ।**

---

यत्र साक्षादपायभूतक्रिया निर्दिश्यते तदाद्यम् । यथा—ग्रामादायातीत्यादि । यत्र धात्वन्तरार्थगर्भं स्वार्थमाह तद्द्वितीयम् । यथा— बलाहकात् विद्योतते विद्युत् । बलाहकात् निसृत्य विद्योतत इत्यर्थः । प्रमाणान्तरप्रतीतक्रियाकं तृतीयम् । यथा 'गच्छन्तं पश्यन्नाह—कस्मात्त्व'मिति ।

१ **सम्बन्धे षष्ठीति** । सम्बन्धश्च स्वस्वामिभावावयवावयविभावादिभेदादनन्तः कारकेभ्यश्चान्यः । क्रियासम्बन्धाऽभावात् । तदुक्तम्—

**"सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।**
**श्रुतायामश्रुतायां च क्रियायां सोऽभिधीयते ॥" इति ।**

तत्र श्रुतायां यथा—न माषाणामश्नीयात् । अश्रुतायां यथा—राज्ञः पुरुष इति । तत्र यद्यपि सम्बन्धस्योभयाश्रितत्वादुभयोरपि पर्यायेण वा षष्ठी प्राप्ता तथाप्यप्रधानादेव विशेषणादेव । तदुक्तम्—

**"परार्थे स्वार्थनिःक्षेपादप्रधानं विशेषणम् ।**
**विशेष्यं तत्प्रधानं स्यात्स्वार्थस्यैव प्रकाशनात् ॥**
**भेद्यभेदकयोः श्लिष्टिः सम्बन्धोऽन्योन्यमुच्यते ।**
**द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥' इति ।**

## आधारे सप्तमी । १० ।

आधारोऽधिकरणम् । तत् षड्विधम् । औपश्लेषिकम् १, सामीप्यकम् २, अभिव्यापकम् ३, वैषयिकम् ४, नैमित्तिकम् ५, औपचारिकं ६ चेति ।

**"कटे शेते कुमारोऽसौ वटे गावः सुशेरते ।**
**तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम् । १ ।**
**युद्धे सन्नह्यते धीरोऽङ्गुल्यग्रे करिणां शतम्" ॥१०॥**

## भावे सप्तमी । ११ ।

प्रसिद्धक्रियया प्रसिद्धक्रियाया लक्षणं बोधनं भावस्तत्र सप्तमी । वर्षति देवे चौर आयातः । पतत्यंशुमालिनि पतितोऽरातिः । काले शरदि पुष्यन्ति सप्तच्छदाः ॥ ११ ॥

## इति सप्तमी ।

---

१ **सप्तमीति** । अधिक्रियते—यस्मिन्नित्याधारः । स च क्रियाश्रयकर्तृकर्मणोरेव । तथोक्तं भर्तृहरिणा—

"कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् ।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥" इति ।

आधारस्यैवाधिकरणसंज्ञात्वमभिप्रेत्याधिकरणभेदानाह—**षड्विधमित्यादि** । तत्रान्यत्र सिद्धयोराधाराधेययोः प्रादेशिकः सम्बन्ध उपश्लेषः । सामीप्यं सान्निध्यम् । तत्र भवं, समीपं भवं सामीपिकमिति वा । अपृथग्देशयोराधेययोः सकलावयवसम्बन्धेन व्यापकमभिव्यापकम् । विषयोऽन्यत्र भावस्तत्र भवं वैषयिकम् । निमित्तं कारणम् । उपचारो लक्षणा । तत्र भवम् । क्रमेणोदाहरति—**कटे शेते इत्यादि** । भावपदव्याचिख्यासुस्तत्स्वरूपमाह—**क्रियायालक्षणमिति** । क्रिया—धात्वर्थः । सा च प्रसिद्धा अप्रसिद्धा चेति द्विविधा । तत्रा प्रसिद्धायास्तस्या लक्षणत्वाऽसम्भवात्प्रसिद्धया क्रियया अप्रसिद्धायाश्चौरागमनक्रियाया लक्षणं भाव इति भावः । सर्ववि-

# अथोपपदविभक्त्यर्थौ निरूप्यते ॥

**विनासहनमऋतेनिर्द्धारणस्वाम्यादिभिश्च । १२ ।**

एतैरपि योगे द्वितीयाद्या विभक्तयो भवन्ति । विना पापं सर्वं फलति ।

**"विना वातं विना वर्षं विद्युतः पतनं विना ।**
**विना हस्तिकृतं दोषं केनमौ पातितौ द्रुमौ ॥ १ ॥**

अन्तरेणाक्षिणी किं जीवितेन । अनन्तरा त्वां मां हरिरित्यादिपदात् ग्राह्यम् ॥ १२ ॥

**सहादियोगे तृतीयाऽप्रधाने । १३ ।**

सह सदृशं साकं सार्द्धं सममित्यादियोगेऽपि तृतीया भवति । सह शिष्येणागतो गुरुः । सदृशश्चैत्रो मैत्रेण । साकं नयनाभ्यां श्लक्ष्णा दन्ताः । सार्धं धनिभिर्धूतः साधुः । समं चन्द्रेणोदितो गुरुः ॥१३॥

**नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगे चतुर्थी । १४ ।**

नमो नारायणाय । स्वस्ति राज्ञे । सोमाय स्वाहा । पितृभ्यः स्वधा । अलं मल्लाय । वषडिन्द्राय ॥ १४ ॥

---

दितत्वात्प्रसिद्धया वर्षणक्रियया अप्रसिद्धा चौरागमनक्रिया लक्ष्यन्ते । अंशुमाली सूर्यस्तत्पतनं प्रसिद्धम् । अरातिः=शत्रुस्तत्पतनं चाऽप्रसिद्धम् ॥

१ **विना सहेति** । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति न्यायादादिशब्दस्य प्रत्येकं सम्बन्धः । तथा च विनादिभिर्योगे द्वितीया । सहादियोगे तृतीया । नमआदिभिर्योगे चतुर्थी । ऋतेआदिभिर्योगे पञ्चमी । निर्द्धारणादेरर्थत्वान्निर्द्धारणार्थादौ । स्वाम्यादिभिः सप्तमीति ।

२ **नमःस्वस्तीत्यादि** । अलं मल्लो मल्लायेत्यत्रालंशब्दः पर्याप्त्यर्थः । शक्त इत्यर्थः । वारणार्थस्य तु योगे तृतीयैव ।

## ऋतेआदियोगे पञ्चमी । १५ ।

ऋते ज्ञानान्न मुक्तिः । अन्यो गृहाद्विहारः । आराद्वनात् । इतरो ग्रामात् ॥ १५ ॥

## ऋतेयोगे द्वितीया च । १६ ।

ज्ञानमृते । चकारात् विनादियोगेऽपि तृतीयापञ्चम्यौ स्तः । ज्ञानेन विना । ज्ञानात् विना ॥ १६ ॥

## दिग्योगे पञ्चमी । १७ ।

पूर्वो ग्रीष्माद्वसन्तः ॥ १७ ॥

## निर्द्धारणे षष्ठीसप्तम्यौ । १८ ।

निर्द्धारणम्—द्रव्यगुणजातिभिः समुदायात् पृथक्करणं, तत्र षष्ठीसप्तम्यौ भवतः । क्रियापराणां भगवदाराधकः श्रेष्ठः, क्रियापरेषु वा । गवां कृष्णा गौः सम्पन्नक्षीरा, गोषु वा । एतेषां क्षत्रियः शूरतमः, एतेषु वा ॥ १८ ॥

---

१ **निर्द्धारणमित्यादि** । क्रियया गुणेन जात्या वा धर्मविशेषेण निर्द्धार्यमाणस्य समुदायाद्भिन्नीकरणं निर्द्धारणमित्यर्थः । तत्र षष्ठी । चकारात्सप्तम्यपि । सा चाप्रधानात्समुदायादेव न निर्द्धार्य्यात् । ननु निर्द्धार्यमाणोऽवयवः समुदायाद्भिन्न इति यदा आधारत्वेन विवक्ष्यते तदा आधारत्वादेव वृक्षे शाखेतिवत्सप्तमी स्यात् । यदा त्ववयवसम्बन्धमात्रं विवक्ष्यते तदा वृक्षस्य शाखेतिवत्सम्बन्ध इत्येव षष्ठी स्यादिति चेत्सत्यम् । तस्यैव प्रपञ्चार्थत्वात् निर्द्धारणार्थकषष्ठ्या समासनिषेधार्थत्वाच्च । क्रियागुणजातिभिरित्यस्य सम्भवदुक्तिकत्वात् अमीषां छात्राणां देवदत्तः पटुरित्यादौ संज्ञादिभिरपि व्यवच्छेदे भवत्येव । क्रमेणोदाहरति—**क्रियापराणामित्यादि** । आराधनक्रियया कृष्णगुणेन क्षत्रियत्वजात्या च भगवदाराधकादयो विशेष्यन्ते ।

## स्वाम्यादिभिश्च । १९ ।

स्वाम्यादियोगे षष्ठीसप्तम्यौ भवतः । गवां स्वामी, गोषु स्वामी। गवामधिपतिः, गोष्वधिपतिः ॥ १९ ॥

## कर्तृकार्ययोरक्तादौ कृति षष्ठी । २० ।

कर्तरि च कार्ये च षष्ठी विभक्तिर्भवति, क्तादिवर्जिते कृदन्ते शब्दे प्रयुज्यमाने । व्यासस्य कृतिः । भारतस्य श्रवणम् ॥ २० ॥

## स्मरतौ च कार्ये । २१ ।

स्मरतौ धातौ प्रयुज्यमाने कार्ये कर्मणि विषये षष्ठी ।

---

१ **स्वाम्यादीति** । आदिशब्दादीश्वरदायादसाक्षिप्रतिभूप्रसूतयोगे षष्ठीसप्तम्यौ । गवामीश्वरः । गोष्वीश्वर इत्यादि ।

**अक्तादाविति** । आदिशब्दात् क्त क्तवतु कि उः इष्णु उकः क्त्वाद्यन्ताव्ययं शतृ शान क्वसु कान खलर्थशीलार्थतृच्भविष्यदर्थकाऽकमविष्यदाधमर्ण्येन इत्यादयो गृह्यन्ते । क्रमेण प्रत्युदाहरणम्—त्वया कृतम् । ग्रामं प्राप्ताः सर्वे । कृतवान् विश्वं चक्री । हरिं दिदृक्षुः । अलंकरिष्णुर्हरिम् । दैत्यान् घातुकः । जगत्सृष्ट्वा । सुखं कर्तुम् । हरिं प्रणम्य । लक्ष्मीमिच्छन् । मालां बिभ्राणः । अन्नं पेच्विवान् । शुभं चक्राणः । ईषत्करः प्रपञ्चो हरिणा । विश्वं कर्ता । सतः पालकोऽवतरति । ग्रामं गामी । सुखमृणं दायी ।

२ **स्मरताविति** । स्मरतावित्यर्थग्रहणम् । ततश्च स्मरणार्थधातुप्रयोगे कर्मणि षष्ठीत्यर्थः । चकाराद्दयेशोरपि । सर्पिषो दयते । जगतामीष्टे । कर्मत्वविवक्षायां तु—मातरं स्मरति । ननु कर्माद्यविवक्षायां सम्बन्धमात्रविवक्षायां षष्ठीसिद्धावानर्थक्यमेतस्येति चेत्सत्यम् । एतदारम्भसामर्थ्यादुपपदविधानषष्ठ्या न समास इति सूचनात् । ततश्च मातुः स्मरणमित्यादौ समासाऽभावः ।

मातुः स्मरति । मातरं स्मरति । ***हेतौ तृतीया पञ्चमी च वक्तव्या*** । अनित्यः शब्दः कृतकत्वेन कृतकत्वाद्वा ॥ २१ ॥

**भयहेतौ पञ्चमी । २२ ।**

चोराद्बिभेति । व्याघ्रात् त्रस्यति । विद्युत्पाताच्चकितः ॥२२॥

**षष्ठीहेतुप्रयोगे च । २३ ।**

कस्य हेतोरियं कन्या । अन्नस्य हेतोर्वसति ॥ २३ ॥

**इत्थम्भावे तृतीया । २४ ।**

शिष्यं पुत्रेण पश्यति । संसारममारेण पश्यति । पुष्करिणीं नद्या पश्यति ॥ २४ ॥

**येनाङ्गविकारः । २५ ।**

येनाङ्गेन विकृतेनाङ्गिनोऽङ्गविकारो लक्ष्यते तस्मादङ्गवाचका-

---

१ **हेताविति** । साध्यसाधक इत्यर्थः । शब्दे अनित्यत्वं साध्यम् । कृतकत्वं हेतुः । अनित्य इति प्रथमाप्रयोगश्च साध्यत्वद्योतनायेत्यदोषः । **भयहेताविति** । भयस्य हेतुः करणं तत्र पञ्चमीत्यर्थः । भयेत्युपलक्षणं जुगुप्साविरामप्रमादार्थाना । ततश्च पापाज्जुगुप्सते । पापाद्विरमति । धर्मात्प्रमाद्यति ॥

२ **हेतुप्रयोगे इति** । प्रयोगस्य शब्दधर्मत्वाद्धेतुशब्द एव गृह्यते न हेत्वर्थः । चकारात्सर्वादियोगे तृतीयापि । कस्मै हेतोः केन हेतुनेत्यादि । सर्वनाम्नो हेतुप्रयोगे द्वितीयाव्यतिरिक्ताः सर्वा विभक्तयो निमित्तकारणहेतुत्वार्थे भवन्तीति भाष्यकारादयः । को हेतुः । केन निमित्तेन । कस्मै कारणायेत्यादि । सर्वनामाप्रयोगेऽपि प्रातिपदिकमात्रात्तृतीयादय इति केचित् । ज्ञानेन निमित्तेन हरिः सेव्यः । ३ **इत्थमिति** । इत्थम् अनेन प्रकारेण भवनम् इत्थंभावः, तस्मिन्नर्थे तृतीया भवतीत्यर्थः । शिष्यं पुत्रत्वेन संसारमसारत्वेन पश्यतीत्यर्थः ॥

४ **येनेति** । अङ्गानि सन्त्यस्येत्यङ्गं शरीरं । येनेति तदवयवो हेतुत्वेन

च्छब्दात्तृतीया विभक्तिर्भवति । देवदत्तोऽक्ष्णा काणः । पादेन खञ्जः । कर्णेन बधिरः । शिरसा खल्वाटः ॥ २५ ॥

जनिकर्तुः[1] प्रकृतिः । २६ ।

जायमानस्य कार्यस्योपादानमपादानसंज्ञं भवति । तत्रापादाने पञ्चमी । "यस्मात्प्रजाः प्रजायन्ते तद् ब्रह्मेति विदुर्बुधाः" ॥२६॥

आङादियोगे[2] पञ्चमी । २७ ।

आङादियोगे लिङ्गात्पञ्चमी भवति । आ पाटलिपुत्राद्वृष्टो देवः ॥ २७ ॥

तादर्थ्ये[3] चतुर्थी । २८ ।

'संयमाय श्रुतं धत्ते, नरो धर्माय संयमम् ।
धर्मं मोक्षाय मेधावी, धनं दानाय भुक्तये ।१' ॥२८॥

---

निर्दिश्यते स च विकृते एव विकारहेतुरिति येन विकृतेनाऽङ्गिनो विकारो लक्ष्यते तस्मादङ्गात्तृतीयेत्यर्थः ॥

१ **जनिकर्तुरिति** । जननं जनिः, जन्यर्थस्य कर्ता जनिकर्ता, स च जायमान एवेत्यभिप्रेत्याह—**जायमानस्य कार्यस्येत्यादि** । उपादानमत्र कारणमात्रं गृह्यते, न समवायिकारणम् । पुत्रात्प्रमोदो जायते इत्यादौ तदभावादप्रसङ्गात् ।

२ **आङादियोगे चेति** । मर्यादाभिविध्यर्थकाङ्योगे पञ्चमी । आदिना वर्ज्जनार्थकाऽपपर्योर्योगेऽपि । अप हरेः परि हरेः संसारः । हरि वर्जयित्वा संसार इत्यर्थः । तथा भूकर्तुः प्रभवादपि । हिमवतो गङ्गा प्रभवति । तत्र प्रथमं दृश्यत इत्यर्थः । तथा पराजेः प्रयोगेऽसह्यार्थादपि । पापात्पराजयते । इत्यादि ज्ञेयम् । ३ **तादर्थ्ये इति** । तच्छब्देन कार्यं निर्दिश्यते । तस्मै इदं तदर्थं । तदर्थशब्दः कारणसम्बन्धमाह । ततश्च षष्ठीप्राप्तौ वचनमितिप्रसादकृतः ।

## क्रुध्यादियोगे चतुर्थी । २९ ।

क्रूराय क्रुध्यति । मित्राय द्रुह्यति । पुत्राय कुप्यति । गुणवते असूयति । ***क्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वक्तव्या*** हर्म्यात् प्रेक्षते । हर्म्यमारुह्येत्यर्थः । आसनात् प्रेक्षते । आसने उपविश्येत्यर्थः । ***निमित्तात्कर्मयोगे सप्तमी च वक्तव्या*** ।

**'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।**
**केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥१॥' २९॥**

## विषये च । ३० ।

विषयेऽर्थे सप्तमी भवति । तर्के चतुरः ॥ ३० ॥

---

१ **क्रुधादियोगे चेति** । क्रुधद्रुहेर्ष्यासूयार्थाः क्रुधादयस्तद्योगे यं प्रति कोपस्ततश्चतुर्थी वाच्येत्यर्थः । ततश्च भार्यामीर्ष्यतीत्यादौ तां प्रति कोपाऽभावाच्चतुर्थ्यभावः । सोपसर्गयोस्तु क्रुधद्रुहोर्द्वितीयैव । क्रूरमभिक्रुध्यति । अभिद्रुह्यति ।

२ **निमित्तादिति** । निमित्तात्प्रयोजनवाचिशब्दात्कर्मणो योगे सप्तमी वक्तव्येत्यर्थः । चर्मणीत्यादौ हननिमित्ताच्चर्मादेः द्वीप्यादिकर्मयोगे सप्तमी समभूत् । सीमनिमित्तं पुष्कलकः पाषाणो हतो निहितः । केचित्तु— "गुदमेढ्रान्तरालं वा सीमेति प्रोच्यते बुधैः । पुष्कलो वृषभेदः स्याद्गन्धः सौगन्ध्यहेतुकः ॥" सीम्नि गुदमेढ्रान्तरालावयवनिमित्तं पुष्कलो मूषकविशेषः हतो धृत इत्याहुः । **विषये चेति** । क्रियापदाऽप्रयोगे कर्तृकर्माद्यसम्भवे तदाधारत्वासम्भवादारम्भः । **तर्के चतुर इति** । तर्कविषयं चातुर्यमस्येत्यर्थः ।

## षष्ठीसप्तम्यौ चानादरे । ३१ ।

बहूनां क्रोशतां गतश्चौरः । बहुष्वसाधुषु निवारयत्स्वपि स्वयमार्यो याति साधुमार्गेण । बहुषु साधुषु वसत्स्वपि स्वयमनार्यो यात्यसाधुमार्गेण । मातापित्रो रुदतोः प्रव्रजति पुत्रः ॥ ३१ ॥

## अन्योक्ते प्रथमा । ३२ ।

यदिदं कार्यत्वादन्येनाख्यातेन कृता चोक्तं भवति तदा प्रथमा प्रयोक्तव्या । घटः क्रियते । पटः कार्यः ॥ ३२ ॥

## छन्दसि स्यादिः सर्वत्र । ३४ ।

दध्ना जुहोति । पुनन्तु ब्रह्मणस्पतिः । व्रजयतीर्विरेजुः ॥ ३४ ॥

## इति कारकादिविभक्त्यर्थाः ॥

---

१ **षष्ठीसप्तम्यौ चानादर इति** । अनादरे षष्ठी सप्तमी च वक्तव्येत्यर्थः । अनादरस्तु बलहठविवेकाऽविवेकजत्वाच्चतुर्द्धा इति चेतसि कृत्वोदाहरणचतुष्टयमाह–**बहूनामित्यादि** । बहून् क्रोशतोऽनादृत्य गत इत्यर्थः । आर्यो विवेकी विवेकादसन्मार्गमनादृत्य सन्मार्गेण यातीत्यर्थः । अनार्य इत्यत्राविवेकादनादरः सन्मार्गस्य । प्रव्रजति–संन्यस्यति । हठाद्विवेकाद्वा ।

२ **अन्योक्त इति** । अन्यैरुक्तमन्योक्तम् । तदेव विवृणोति–**यदिदमिति**। कृता चेति चकारात्तद्धितेन समासेन च । तद्धितोक्ते-कुङ्कुमेन रक्तं कौङ्कुमम् । समासोक्ते–प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्रामः । **छन्दसीति** । क्वचित्प्रवृत्तिरिति बाहुलकात् दधि जुहोतीति द्वितीयार्थे तृतीया । 'ब्रह्मणस्पति' मित्यर्थे प्रथमा । व्रजत्य इत्यर्थे द्वितीया इत्यादि ।

**"कर्त्ता कर्म च करणं सम्प्रदानं तथैव च ।**
**अपादानाधिकरणमित्याहुः कारकाणि षट् ॥"**

इतिप्रसादकृतां वासुदेवभट्टाः प्राहुः ॥

**इति सारस्वतटीकायां कारकप्रकरणम् ।**

# अथ समासप्रकरणम् ।

अथाऽर्थवद्विभक्तिविशिष्टानां पदानां समासो निरूप्यते ॥

**समासश्चान्वये नाम्नाम् । १ ।**

नाम्नामन्वययोग्यत्वे सत्येव समासो भवति । चशब्दात्तद्धितेऽपि भवति । ततो भार्या पुरुषस्येत्यादौ न भवति, परस्परमसम्बन्धात् । स च षड्विधः—अव्ययीभावस्तत्पुरुषो द्वन्द्वो बहुव्रीहिः कर्मधारयो द्विगुश्चेति । तत्र पूर्वपदार्थप्रधानोऽव्ययीभावः । द्विगुतत्पुरुषौ परपदार्थप्रधानौ । द्वन्द्वकर्मधारयौ चोभयपदार्थप्रधानौ । बहुव्रीहिरन्यपदार्थप्रधानः । तस्य क्रियाभिसम्बन्धात् उभयपदप्रधानो बलवान् । यत्रानेकसमासप्राप्तिस्तत्र उभयपदप्रधानो बलवान् । ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वञ्च समासप्रयोजनम् । अधि स्त्री इति स्थिते स्त्रीशब्दाद् द्वितीयैकवचनम् अम् । स्त्रीभ्रुवोः । स्त्रियमधिकृत्य भवतीति विग्रहे । अन्वययोग्यार्थसमर्थकः पदसमुदायो विग्रहः । वाक्यमिति यावत् । स्वपदैरन्यपदैर्वा विविच्य कथनं

---

१ **अर्थार्थवदित्यादि**। अयमाशयः—'समासश्चान्वये नाम्ना'मिति सूत्रे चेदविभक्ति नामेति परिभाषितं नाम गृह्यते तदा विभक्तिरहितत्वादसाधुत्वमनन्वितत्वं समासान्तवर्तिविभक्तिलोपविधायकवैयर्थ्यं च स्यादतो नामाख्यातेत्यादौ प्रसिद्धं सुबन्तापरपर्यायं नाम गृह्यते । अत उक्तं—**पदानामिति**। पदत्वं चानर्थकाना निपातानामपीति अर्थवद्विभक्तिविशिष्टानामित्युक्तम् ।

२ समासप्रयोजनमह—**ऐकपद्यमित्यादि** । अनेकेषां पदानां भाव ऐकपद्यम् । समासे आद्युदात्तादिस्वरैक्यं च ।

कथनं विग्रहः । *** कृते समासे अव्ययस्य पूर्वनिपातो वक्तव्यः *** ॥ १ ॥

**पूर्वेऽव्ययेऽव्ययीभावः । २ ।**

अव्यये पूर्वपदे सति योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति । इति समाससंज्ञायां सत्याम् ॥ २ ॥

**समासप्रत्यययोर्लुक् । ३ ।**

समासे वर्तमानायाः विभक्तेः प्रत्यये च परे लुग् भवति । इत्यमो लुक् । 'निमित्ताऽभावे नैमित्तिकस्याप्यभावः' । नामसंज्ञाया स्यादिर्विभक्तिः । अधि स्त्री सि इति स्थिते ॥ ३ ॥

**स नपुंसकम् । ४ ।**

सोऽव्ययीभावो नपुंसकलिङ्गो भवति । नपुंसकत्वाद्ध्रस्वत्वम् । अधिस्त्रि ॥ ४ ॥

**अव्ययीभावात् । ५ ।**

अव्ययीभावात्परस्या विभक्तेर्लुग् भवति । अधिस्त्रि गृहकार्यम् । रायमतिक्रान्तमतिरि कुलम् । नावमतिक्रान्तमतिनु जलम् ।

---

**समासेति** । अव्ययीभावाद्विभक्तेर्लुगित्यतो विभक्तेर्लुगित्यनुवर्तते । समासप्रत्यययोरित्येकापि सप्तमी भेदेनान्वेति सामर्थ्यादित्यभिप्रेत्याह— **समासे वर्तमानायाः विभक्तेः प्रत्यये च परे इति** । समासावयवभूताया इत्यर्थः । नामसंज्ञायां विभक्तिलुकि विभक्तिरहितत्वेनाऽर्थवत्त्वेन चाऽविभक्ति नामेति नामसंज्ञायामित्यर्थः । ह्रस्वत्वं—'नपुंसकस्ये'ति सूत्रेणेत्यर्थः । अव्ययपूर्वत्वेऽपि पूर्वपदार्थप्राधान्याभावादव्ययीभावाऽभावं दर्शयन्नत्यादयः क्रान्ताद्यर्थे द्वितीययेति तत्पुरुषोदाहरणं ह्रस्वप्रसङ्गत आह—

***ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ च वक्तव्यौ*।**

योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । रूपस्य योग्यमनुरूपम् । पदार्थान् व्याप्तुमिच्छा वीप्सा । विष्णुं विष्णुं प्रति प्रतिविष्णु । सादृश्ये तु—यथा हरिस्तथा हरः ॥ ५ ॥

## यथाऽसादृश्ये । ६ ।

यथाशब्दोऽसादृश्ये वर्त्तमानः समस्यते । शक्तिमनतिक्रम्य करोतीति यथाशक्ति ॥ ६ ॥

## अतोऽमनतः । ७ ।

अकारान्तादव्ययीभावात्परस्या विभक्तेरम् भवति अतं वर्जयित्वा । कुम्भस्य समीपमुपकुम्भं वर्तते । उपकुम्भं पश्य । अनत इति विशेषणात् पञ्चम्या अम् न भवति ॥ ७ ॥

## वा टाङ्योः । ८ ।

टा ङि इत्येतयोर्वा अम् भवति । उपकुम्भेन कृतम् उपकुम्भं कृतम् । उपकुम्भं निधेहि । उपकुम्भे निधेहि । उपकुम्भादानय॥८॥

---

**रायमतिक्रान्तमित्यादि ।** कृते समासेऽव्ययस्येति सामान्यनिर्देशात्पूर्वनिपातः । कुलविशेषणत्वात्क्लीबत्वम् ॥

**यथेति ।** योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । तत्र सादृश्यव्यतिरिक्तेऽर्थे वर्तमानो यथाशब्दः समस्यत इत्यर्थः ।

तत्र पदार्थानतिक्रम उदाहरति—**शक्तिमनतिक्रम्येत्यादि ।** सादृश्ये तु यथा हरिस्तथा हरः ।

**अवधारणार्थे यावति च । ९ ।**

अवधारणार्थे यावच्छब्दे पूर्वपदे सति अव्ययीभावसंज्ञकः समासो भवति । यावन्त्यमत्राणि सम्भवन्ति तावतो ब्राह्मणान् निमन्त्रयस्वेति यावदमत्रम् । मक्षिकाणामभावो निर्मक्षिकं वर्तते ॥ ९ ॥

**इत्यव्ययीभावसमासः ॥**

## अथ तत्पुरुषः ।

**अमादौ तत्पुरुषः । १ ।**

द्वितीयाद्यन्ते पूर्वपदे सति योऽन्वयस्स तत्पुरुषसंज्ञकः समासो भवति । ग्रामं प्राप्तो ग्रामप्राप्तः । दात्रेण छिन्नं दात्रच्छिन्नम् । यूपाय दारु यूपदारु । वृकेभ्यो भयं वृकभयम् । राज्ञः पुरुषो

---

**अवधारणार्थे इति** । अवधारणं निश्चयस्तदर्थके यावच्छब्दे पूर्वपदे सति योऽन्वयः सोऽव्ययीभाव इत्यर्थः। अन्यत्र—यावद्दत्तं तावद्भुक्तम् । नावधारयामि कियन्मया भुक्तमिति । **निर्मक्षिकमिति** । मक्षिकाणामभाव इति विग्रहः । अर्थाभावार्थकाव्ययसमासे क्लीबत्वात् ह्रस्वत्वे अमादेशे च निर्मक्षिकमिति निर्देशः ।

**अमादाविति** । अम् आदिर्येषां ते अमादयः । द्वितीयाद्याः सप्तम्यन्ता विभक्तयः । तासां च प्रत्ययत्वात्प्रत्ययग्रहणेन तदन्तस्य । जातावेकवचनम् । पूर्वेऽव्ययेऽव्ययीभाव इत्यतः पूर्वे इत्यनुवर्तत इत्येतत्सर्वं चेतसि कृत्वाह—**द्वितीयाद्यन्ते पूर्वपदे सतीति** । वागुणादित्यतो वानुवृत्तेर्वाक्यमपि । वाशब्दादमादाविति सामान्योक्तेर्लोकाद्वा स्वयंकृतं सामिकृतमित्यादावपि प्रयोगतस्तत्पुरुषोऽवसेयः । तथा अर्थेन नित्यसमासो विशेष्यलिङ्गता च । द्विजायायं द्विजार्थः पटः । द्विजार्था पटी । द्विजार्थं वस्त्रम् । तथा इवेन नित्यसमासो विभक्त्यलोपश्च । वागर्थाविव । तथा निर्धारणार्थषष्ठ्या न समासः । गवा कृष्णा संपन्नक्षीरा । एवं प्रतिपदविधानाऽपि षष्ठी

राजपुरुषः । अक्षेषु शौण्डः अक्षशौण्डः । ***क्वचिदमाद्यन्तस्य परत्वम्*** । आहिताग्नि। पूर्वं भूतो भूतपूर्वः । ***समासे क्वचिदैकपद्यं णत्वहेतुः*** । शराणां वनं शरवणम् । आम्राणां वनमाम्रवणम् । ***पानस्य वा*** । सुरापानं। सुरापाणम् ॥ १ ॥

**नञि । २ ।**

नञि पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञकः समासो भवति । न ब्राह्मणः अब्राह्मणः ॥ २ ॥

---

न समस्यते । सर्पिषो ज्ञानम् । सर्पिषोपायेन प्रवर्तनमित्यर्थः । तथा पूरण-तृप्त्यर्थसदव्ययतव्यसमानाधिकरणार्थेन षष्ठी न समस्यते । गता षष्ठः । पटस्य शौक्ल्यम् । चन्दनगन्ध इत्यादौ सदा गुणवाचिनस्तु भवत्येव । फलानां तृप्तः । द्विजस्य कुर्वन् । सता कुर्वाणः। सतां कृत्वा । सता कर्तव्यम् । राज्ञो नलस्य । एवं मतबुद्धपूजितयोगेऽपि न । सतां मतो बुद्धः पूजितो वा । अधिकरण-वाचिक्तयोगेऽपि न । इदमेषामासितं गतं भुक्तं वा । उभयप्राप्तौ कर्मषष्ठ्या अपि न । आश्चर्यो गवां दोहोऽगोपेन । तथा भवतः शायिकेत्यादौ अक-योगे कर्तृषष्ठ्याः न समासः । अपां स्रष्टा । वज्रस्य भर्ता । सतामर्च्चक इत्यादौ कर्तरि तृजकाभ्यां योगे न । भूभर्ता । उद्दालकपुष्पभञ्जिका । दन्त-लेखक इत्यादौ च भवत्येवेत्यादिप्रयोगवशाद्व्यवस्थाऽवसेयेति **प्रसाद-टीका**कृतः ।

**क्वचिदमाद्यन्तस्येति** । अमादौ पूर्वपदे सतीत्युक्तेरमाद्यन्तस्य तत्पुरुषे पूर्वनिपातत्वमुक्तम् । तत्र प्रयोगतः क्वचित्परत्वं वक्तव्यमित्यर्थः । क्वचिदित्युक्तेरग्न्याहित इत्यादौ । 'प्रुर्नो णोऽनन्ते' इत्यत्र रेफात्परस्याऽपि नस्य णत्वाऽभावनिर्देशाज्ज्ञापकाद्भिन्नपदस्थनिमित्ते णत्वाऽभावात्समासे चैक-पद्याण्णत्वं भवति न वेत्याकांक्षायामाह—**समासे क्वचिदैकपद्यमिति** ।

नाऽ । ३ ।

समासे सति नञोऽकारादेशो भवति नाकादिवर्जम् । नाकः । नपुंसकम् ॥ ३ ॥

अन् स्वरे । ४ ।

समासे सति नञोऽनादेशो भवति स्वरे परे । अश्वादन्योऽनश्वः । धर्माद्विरुद्धोऽधर्मः । ग्रहणाऽभावोऽग्रहणमित्यादि । तदन्यतद्विरुद्धतदभावेषु नञ् वर्तते ॥ ४ ॥

इति तत्पुरुषः ।

चार्थे द्वन्द्वः । १ ।

समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्रेश्वरं गुरुं च भजस्वेति प्रत्येकमेकक्रियाभिसम्बन्धे समुच्चये समासो नास्ति ।

---

**नेति** । न—अ इति च्छेदः ।

**नाकादिवर्ज्जमिति** । पुंवद्वेत्यतोऽनन्तरसूत्राद्वानुवृत्तेर्व्यवस्थया नाकादौ नेत्यर्थः । नाकादयश्च नाकनकुलनखनमुचिनपुंसकनक्षत्रादयः । 'ङ्णनां ह्रस्वादिः स्वरे' इत्तत्र शे चग्वेत्यनन्तरसूत्रतो वानुवृत्तेर्व्यवस्थया अनश्व इत्यादौ तदभावः ।

**तदन्येत्यादि** । तस्मादन्यः, तेन विरुद्धः, तस्याभाव इति विग्रहः ।

**चार्थ इति** । चस्यार्थश्चार्थः, तस्मिन् चार्थे । जात्यभिप्रायेणैकवचनम् । चार्थानाह—**समुच्चयेत्यादि** । समुच्चयान्वाचययोः स्वरूपं निरूपयन्नन्वययोग्यत्वाऽभावस्तत्र समासाभाव इत्याह—**तत्रेति** । ईश्वरं भजस्व गुरुं च भजस्वेति चस्य एकस्या एव भजनक्रियाया ईश्वरगुरुभ्यां प्रत्येकं सम्बन्धात्समुच्चयः। यदा त्वेकस्य प्रधानस्यानुरोधेनतरदन्वाचीयते तदन्वा-

बटो ! भिक्षामट गाश्चानयेति क्रमेण क्रियाद्वयसम्बन्धे अन्वाचये च समासो नास्ति, परस्परमसम्बन्धात् । इतरेतरयोगे समाहारे चार्थे द्वन्द्वः समासो भवति । ***द्वन्द्वेऽल्पस्वरप्रज्ञाने इकारोकारान्तानां पूर्वनिपातो वक्तव्यः*** । अग्निश्च मारुतश्च अग्निमारुतौ । पटुश्च गुप्तश्च पटुगुप्तौ । स्त्री च पुरुषश्च स्त्रीपुरुषौ । भोक्ता च भोग्यश्च भोक्तृभोग्यौ । धवश्च खदिरश्च धवखदिरौ । ***देवताद्वन्द्वे पूर्वपदस्य दीर्घो वक्तव्यः*** । अग्निश्च सोमश्च अग्नीषोमौ । इन्द्रश्च बृहस्पतिश्च इन्द्राबृहस्पती । ***अग्न्यादेः सोमादीनां षत्वं वक्तव्यम्*** । इतरेतरयोगे द्विवचनम् । अग्नीषोमौ ! *** एकवद्भावो वा समाहारे वक्तव्यः *** । शशाश्च

---

चयः । तदाह—**बटो भिक्षामटेत्यादि** । अत्र भिक्षाटनं मुख्यं, गवामानयनं तु प्रासङ्गिकम् । एकस्य बटोः क्रमेणाऽटनक्रियया गवानयनक्रियया च सम्बन्धादन्वाचयः । अनयोश्चार्थयोः समासाऽभावे हेतुः—**परस्परमसम्बन्धादिति** । समुच्चये तावत्परस्परानभिसंबद्धा एवेश्वरादयो भजनादिभिः संबध्यमानाः समुच्चीयन्ते । एवमन्वाचयेऽपि अन्योन्यसंबन्धावयवप्राधान्येन क्रियान्वय इतरेतरयोगः । स एव तिरोहितावयवप्राधान्यः । संहतिप्राधान्यः समाहारः ॥

द्वन्द्वे पूर्वभावनियममाह—**द्वन्द्वेऽल्पस्वरेत्यादि** । अल्पस्वरस्य प्रधानस्याभ्यर्हितस्य इकारान्तस्य उकारान्तस्य च पूर्वनिपात इत्यर्थः । अल्पस्वरत्वं च समस्यमानपदापेक्षया । अनेकप्राप्तावेकस्य नियमः । हरिहरगुरवः । हरिगुरुहराः । तथा शङ्खदुन्दुभिवीणाः । वीणाशङ्खदुन्दुभयः ।

**इतरेतरयोगे द्विवचनमिति** । द्वयोः समासे द्वयोरप्यवयवयोः प्राधान्याद्द्विवचनम् । बहुवचनानां बहुवचनमूह्यम् । समाहारस्य समुदाय-

कुशाश्च पलाशाश्च शशकुशपलाशाः । तेषां समाहारे शशकुशपलाशम् ॥ १ ॥

**स नपुंसकम् । २ ।**

यस्यैकवद्भावः स नपुंसकं भवति । ***अन्यादीनां विभक्तिलोपे कृते पूर्वस्य सगागमो वक्तव्यः*** । अन्यश्च अन्यश्च अन्योन्यम् । परश्च परश्च परस्परम् ॥ २ ॥

**इति द्वन्द्वसमासः ।**

**एकत्वे द्विगुद्वन्द्वौ । १ ।**

एकत्वे वर्त्तमानौ द्विगुद्वन्द्वौ नपुंसकलिङ्गौ भवतः ॥ १ ॥

**संख्यापूर्वो द्विगुः । २ ।**

संख्यापूर्वः समासो द्विगुर्निगद्यते ॥ २ ॥

**समाहारेऽत ईप् द्विगुः । ३ ।**

समाहारेऽर्थे द्विगुः समासो भवति ततोऽकारान्तादीप् प्रत्ययो भवति । दशानां ग्रामाणां समाहारो दशग्रामी । **अकारान्तो द्विगुः स्त्रियां भाष्यते** । पञ्चाग्नयः समाहृता इति पञ्चाग्नि । पञ्चानां गवां समाहारः पञ्चगु । नपुंसकत्वात् ह्रस्वत्वम् । त्रिफलेति रूढिः । ***पात्रादीनामीप्प्रतिषेधो वक्तव्यः*** । पञ्चपात्रम् । त्रिभुवनम् ॥ ३ ॥

**इति द्विगुसमासः ॥**

---

प्रधानत्वात्तस्य चैकत्वादेकवचने प्राप्ते विकल्पमाह—**एकवद्भावो वेति** । केचित्तु सर्वो द्वन्द्वो विभाषयैकवद्भवतीति इतरेतरयोगेऽप्येकवद्भाव इत्याहुः ।

शशकुशपलाशमित्यादौ नपुंसकत्वार्थमाह—**एकत्वे इति ।**

एकत्वे द्विगुद्वन्द्वावित्यत्र द्विगोः स्मृतत्वात्प्रसङ्गतो द्विगुं निरूपयिष्यंस्तल्लक्षणमाह——**संख्यापूर्व इति** । वाच्यवाचकयोरभेदोपचारात्सङ्ख्याशब्देन तद्वाचकं पदमुपादीयते । तत्पूर्वकोऽन्वयो द्विगुसंज्ञो भवतीत्यर्थः ।

## बहुव्रीहिरन्यार्थे । १ ।

अन्यपदार्थे प्रधाने यः समासः स बहुव्रीहिसंज्ञकः समासो भवति । बहु धनं यस्य स बहुधनः । अस्ति धनं यस्य स अस्तिधनः । यस्य प्रधानस्यैकदेशो विशेषणतया यत्र ज्ञायते स तद्गुणसंविज्ञानो बहुव्रीहिः । यथा लम्बौ कर्णौ यस्य स लम्बकर्णः ।

*** बहुव्रीहौ विशेषणसप्तम्यन्तयोः पूर्वनिपातो वक्तव्यः *** । कण्ठे कालो यस्यासौ कण्ठेकालः । करे धनं यस्य सः करधनः ॥ १ ॥

## नेन्द्वादिभ्यः । २ ।

इन्द्वादिभ्यः परेभ्यः सप्तम्यन्तस्य पूर्वनिपातो न भवति । इन्दुशेखरः । चक्रपाणिः । पद्मनाभः । कपिध्वजः ॥ २ ॥

## प्रजामेधयोरसुक् । ३ ।

सुप्रजाः । सुमेधाः । दुर्मेधाः 'अत्वसोः सौ' इति दीर्घः ॥ ३ ॥

---

**बहुव्रीहिरिति** । अन्यस्य—समस्यमानपदातिरिक्तपदस्यार्थः अन्यार्थस्तस्मिन् अन्यार्थे । अस्तिधनमित्यत्र अस्तीति तिङन्तप्रतिरूपकमव्ययं सत्त्वार्थम् । अन्यपदार्थस्य प्रधानत्वे समस्यमानपदार्थस्य विशेषणत्वोपलक्षणत्वाभ्यां द्वैविध्याद्विशेषणत्वेन तद्गुणसंविज्ञान इत्याह—**यस्य प्रधानस्येति** । यस्य प्रधानस्यान्यपदार्थस्य एकदेशः समस्यमानपदार्थविशेषणतया सद्व्यावर्तकत्वेन यत्र समासे ज्ञायते स तद्गुणसंविज्ञान इत्यर्थः ।

पूर्वनिपातनियममाह—**बहुव्रीहाविति** । अस्योपलक्षणत्वाद्रक्तलतेत्यादौ कर्मधारयेऽपि विशेषणस्य पूर्वनिपातः ।

**प्रजामेधयोरिति** । प्रजा मेधा इत्येतयोः समासेऽसुगागमो वक्तव्य इत्यर्थः । सुष्ठु प्रजा यस्य इति, दुष्टा प्रजा यस्येति च विग्रहः । असुकि

**धर्मादन् । ४ ।**

सुष्ठु धर्मो यस्य सः सुधर्मा ॥ ४ ॥

**अन्यार्थे । ५ ।**

स्त्रीलिङ्गस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति ॥ ५ ॥

**पुंवद्वा । ६ ।**

समासे सति समानाधिकरणे पूर्वस्य स्त्रीशब्दस्य पुंवद्भावो वा भवति । पुंवद्भावादीपो निवृत्तिः । रूपवती भार्या यस्य स रूपवद्भार्यः । वाग्रहणात् कल्याणीप्रिय इत्यादौ न भवति ॥ ६ ॥

**गोः । ७ ।**

गोशब्दस्याऽन्यार्थे वर्तमानस्य ह्रस्वो भवति । पञ्च गावो यस्य सः पञ्चगुः । **संख्यासुव्याघ्रादिपूर्वस्य पादशब्दस्याऽल्लोपो वक्तव्यः** ॐ । सहस्रं पादा यस्य स सहस्रपात् । शोभनौ पादौ यस्य स सुपात् । व्याघ्रस्य पादाविव पादौ यस्य स व्याघ्रपात् । द्वौ पादौ यस्य स द्विपात्, द्विपादौ, द्विपादः । द्विपादं, द्विपादौ ।

---

यस्य लोप इति आकारलोपे अत्वसंतः साविति दीर्घः । यद्यप्यसुक उकारानुबन्धित्वादुगितो नुमिति नुम्प्राप्नोति तथापि तत्र वा दीपोः शतुरित्यतो वानुकर्षणान्न ।

१ **स्त्रीशब्दस्य**—स्त्रीप्रत्ययान्तशब्दस्येत्यर्थः ।

**वाग्रहणादिति** । निपातानामनेकार्थत्वादित्यर्थः । अतश्च उक्तपुंस्कस्यैवात्र । रूढं पुंवत्त्वं नेत्याह—गङ्गाभार्यः । वामोरूभार्यः ।

**सङ्ख्यासुव्याघ्रादिपूर्वस्येति** । व्याघ्रादय उपमानवाचिन एते पूर्वं यस्य तस्येत्यर्थः ।

***शसादौ स्वरे परे पादशब्दस्य पदादेशश्च वक्तव्यः*** ।

द्विपदः । द्विपदा । द्विपाद्भ्यां । द्विपाद्भिरित्यादि ॥ ७ ॥

**टाऽडकाः । ८ ।**

समासे सति ट अ ड क इत्येते प्रत्यया भवन्ति । अचिन्त्यो महिमा यस्य स अचिन्त्यमहिमः ।

**टकारस्तत्पुरुषे च अकारो द्वन्द्व एव च ।**
**डकारश्च बहुव्रीहौ ककारोऽनियमो मतः ॥ ८ ॥**

**नो वा । ९ ।**

नान्तस्य पदस्य टेर्लोपो वा भवति यकारे स्वरे च परे । वाग्रहणात् क्वचिन्न भवत्युपधालोपश्च । अह्नो मध्यं मध्याह्नः । कवीनां राजा कविराजः । टकारानुबन्ध ईवर्थः । कविराजी । राज्ञां पूः राजपुरम् । वाक्च मनश्च वाङ्मनसम् । दक्षिणस्यां दिशि पन्था दक्षिणापथः । अहश्च रात्रिश्च अहोरात्रम् । द्वौ च त्रयश्च परिमाणं येषां ते द्वित्राः । पञ्च षट् च परिमाणं येषां ते

---

१ **शसादाविति** । चकारादनुक्तसमुच्चयार्थादीकारे ईपि आपि तद्धितेऽपि—द्विपदी कुले । द्विपदी-द्विपदा ऋक् नदादित्वादापि हसान्तत्वादापि च पुंवद्भावः । द्विपदोऽपत्यं द्वैपदः । वैयाघ्रपद्यः ॥

२ **टाडका इति** । टश्च अश्च डश्च कश्च ते टाडकाः । एते प्रत्ययाः समासान्ता अव्ययीभावादिभ्यो यथायोग्य भवन्तीत्यर्थः ।

३ **मध्याह्न इति** । अह्नो मध्यमिति विग्रहे तत्पुरुषे क्वचिदमाद्यन्तस्य परत्वमिति परत्वे सवर्णदीर्घत्वे मध्याह्न इति स्थिते अप्रत्ययेनान्तत्वाभावात्तटिलोपनिवृत्तौ उपधाकारलोपे—मध्याह्न इति । अत्र पुंस्त्वं लोकात् ॥

पञ्चशाः । बहवो राजानो यस्यां नगर्यां सा बहुराजा नगरी । अत्र टिलोपे कृते "आबतः स्त्रियाम्" इत्याप् । बहवः कर्त्तारो यस्य स बहुकर्तृकः ॥ ९ ॥

## कर्मधारयस्तुल्यार्थे । १० ।

पदद्वये तुल्यार्थे एकार्थनिष्ठे सति कर्मधारयः समासो भवति । नीलं च तदुत्पलं च नीलोत्पलम् । रक्ता चासौ लता च रक्तलता । पुमांश्चासौ कोकिलश्चेति पुंस्कोकिलः । ***पुंसः खपे संयोगान्तस्याऽलोपो वक्तव्यः*** । पुंक्षीरम् ॥ १० ॥

## नाम्नश्च कृता समासः । ११ ।

प्रादेरुपसर्गस्य नाम्नश्च कृदन्तेन समासस्तत्पुरुषो भवति । प्रकृष्टो वादः प्रवादः । कुम्भं करोतीति कुम्भकारः । अपकृष्टो वादः अपवादः ॥ ११ ॥

## सहादेः सादि । १२ ।

समासे सति सहादीनां सादिर्भवति । पुत्रेण सह वर्तते इति

---

**१ कर्मधारयस्तुल्यार्थे इति** । तुल्यार्थत्वं—समानार्थत्वं । तच्च प्रायशः पदयोर्दृष्टमिति 'पदद्वये' इत्युक्तम् । तेन नीलाऽचलघट इत्यादौ बहुपदेऽप्यदोषः । **२ एकार्थनिष्ठे सतीति** । भिन्नप्रवृत्तिनिमित्तत्वेऽप्यर्थसमासमहिम्ना एकस्मिन्नर्थे निष्ठा वृत्तिर्यस्येत्यर्थः । अतश्च कुम्भकलशादावनतिप्रसङ्गः । नीलपदं नीलवस्त्रादिभ्यो व्यावृत्य उत्पलपदं च तामरसादिभ्यो व्यावृत्य इकस्मिन्नसितसरोजे वर्तत इति एकार्थनिष्ठत्वम् । नीलपदस्य विशेषणत्वात्पूर्वनिपातः । रक्तलतेत्यत्र समानाधिकरणे लतापदे परे पुंवद्वेति पुंस्त्वातिदेशादापो निवृत्तिः ।

**३ सहादेरिति** । आदिना-समानस्य ज्योतिर्जनपदरात्रिनाभिनाम-

सपुत्रः । सह—सं—तिरसां—सध्रि-समि—तिरयः । सह अञ्चतीति सध्र्यङ् । सम् अञ्चतीति सम्यङ् । तिरः अञ्चतीति तिर्यङ् ॥१२॥

**कोः कद्‌ादिः । १३ ।**

कुशब्दस्य कुत्सितेषदर्थयोस्तत्पुरुष कत् कव का आदेशा भवन्ति । कुत्सितमन्नं कदन्नम् । **ईषदर्थे कोः का-कव-दुष्णे** । ईषदुष्णं—कोष्णं, कवोष्णं, कदुष्णम् । कालवणम् । कोर्मन्दादेशश्च । मन्दोष्णम् । **रथवदयोश्च** । कद्रथः । कद्वदः ॥ १३ ॥

**पुरुषे वा । १४ ।**

कुपुरुषः कापुरुषः ॥ १४ ॥

---

गोत्ररूपस्थानवर्णवयोवचनबन्धुषु पिण्डगन्धलोहितकुक्षिवेणीपत्नीपक्षेषु तथा व्रताचरणार्थे ब्रह्मचारिणि परे यत्प्रत्ययान्ते तीर्थे च सो भवति । समानं ज्योतिर्यस्य स सज्योतिः । सपिण्डः । सब्रह्मचारी । सतीर्थ्यं इत्यादि ।

**१ सहेति** । सह अञ्चतीत्यत्र सहस्य सध्र्यादेशः । सम् अञ्चतीत्यत्र समिरादेशः । तिरः अञ्चतीत्यत्र तिरसस्तिर्यादेशः । एवं देवानञ्चति विष्वगञ्चति अमुमञ्चतीत्यादिविग्रहे—देवद्रि—विष्वद्रि—अदद्र्याद्यादेशाः । देवद्र्यङ् । विष्वद्र्यङ् । अदद्र्यङ् ॥

**२ कोरिति** । तत्पुरुषे समासे कुशब्दस्य कुत्सार्थे ईषदर्थे च वाच्ये कत् कव का इत्यादेशाः स्युः । अन्नत्रिरथवदाक्षेषु कोः कन्नित्यम् । गवाक्षे पुरुषे पथि ईषदर्थे च वाच्येऽम्बुन्यग्नावुष्णे काकत्कवाः । कुत्सितमन्नं कदन्नम् । कत्त्रयः । कद्रथः । कद्वदः । काक्षः । कापुरुषः । कापथः । कुपथः । ईषज्जलं काजलम् । काग्निः । कवाग्निः । कोष्णम् । कदुष्णम् । तृणे च जातौ । कत्तृणम् । तत्पुरुषादन्यत्र—कूष्ट्रो राजा ।

**पथ्यक्षयोः । १५ ।**

कोः कादेशः स्यात् । कुपथः कापथः । कु-अक्षः काक्षः ॥१५॥

**ईषदर्थे च । १६ ।**

ईषज्जलं काजलम् । दधोर्डढौ स्याताम् । षड्भिरधिका दश षोडश । षट् प्रकारः षोढा । षड्धा । संख्यायाः प्रकारे धा । धस्य ढः । ***षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च भवतीति वक्तव्यम्** ।* षट् दन्ता यस्य स षोडन् । षष् दन्त इति स्थिते दन्तस्य दतृ । ऋ इत् । षस्य उत्वम् । दस्य डः । "ऋृ तो नुम्" षोडन् ॥ ***बृहच्छब्दस्य सुडागमस्तलोपश्च*** । बृहतां पतिः—बृहस्पतिः ॥ १६ ॥

**महच्छब्दस्य टेराकारः समानाधिकरणे । १७ ।**

महादेवः । महेश्वरः । द्यौश्च भूमिश्च द्यावाभूमी । द्यौशब्दस्य द्यावादेशः । जायाया जम्भावो दम्भावश्च निपात्यते । दम्पती । जम्पती । क्वचिज्जायापती । आकृतिगणोऽयम् ॥ १७ ॥

**अलुक् क्वचित् । १८ ।**

क्वचित्समासे कृदन्ते तद्धितेऽपि विभक्तेरलुक् भवति ।

---

१ द्यौश्च भूमिश्चेति विग्रहे द्योशब्दस्य दिवशब्दस्य वा द्यावादेशः । एवं जाया च पतिश्चेति विग्रहे जायाया जम्भावदम्भावौ वा । जम्पती । दम्पती । जायापती ।

२ **अलुगिति** । समासप्रत्यययोरिति प्राप्तस्याऽपवादत्वात्, कृदन्ते च तत्प्राप्त्यभावात्सरसिजमित्यादौ नाम्नश्च कृता समासे इति समासे एव

कृच्छ्रान्मुक्तः । अप्सु योनिरस्येत्यप्सुयोनिः । उरसि लोम यस्यासौ उरसिलोमा । हृदिस्पृशतीति हृदिस्पृक् । कण्ठे कालो यस्यासौ कण्ठेकालः । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । वनेचरः । खेचरः । ***समानाधिकरणे शाकपार्थिवादीनां मध्यमपद-लोपो वक्तव्यः*** । शाकः प्रियो यस्य स शाकप्रियः । शाकप्रिय-श्चासौ पार्थिवश्च शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः ॥१८॥

## आदेश्च द्वन्द्वे । १९ ।

द्वन्द्वसमासे पूर्वपदस्य लोपो भवति । चकारग्रहणाद्विकल्पेन । माता च पिता च पितरौ । शिष्यमाणो लुप्यमानार्थाभिधायी । श्व-श्रूश्च श्वशुरश्च श्वशुरौ । दुहिता च पुत्रश्च पुत्रौ ॥ १९ ॥

## ऋतां द्वन्द्वे । २० ।

द्वन्द्वे समासे पूर्वपदस्य ऋकारस्य वा–आकारो भवति । माता च पिता च मातापितरौ ॥ २० ॥

---

प्राप्तलुक्प्रतिषेधात्कृदन्ते इत्यपपाठ इत्यन्ये । तद्धिते अमुष्यापत्यम् आ-मुष्यायणः ॥

१ **शाकपार्थिवादीनामिति** । पार्थिवादौ समानाधिकरणे पूर्व-पदस्य यदुत्तरपदं तस्य लोप इत्यर्थः । शाकः प्रियो यस्य स शाकप्रियः । देवान् पूजयतीति देवपूजक इत्यत्रोत्तरपदयोः प्रियपूजकपदयोर्लोपः ।

२ **ऋतां द्वन्द्वे इति** । विद्यायोनिसम्बन्धवाचिनामृकारान्तानां पुत्रे च परे पूर्वपदान्तस्याकारो वक्तव्य इत्यर्थः । माता च पिता चेति विग्रहे समासे 'एभ्यो माता गरीयसी'त्यादिवचनान्मातुः प्रधानत्वात्पूर्व-निपाते आकारादेशः ।

## द्वन्द्वे सर्वादित्वं वा । २१ ।

द्वन्द्वसमासे सर्वादित्वं वा भवति । वर्णाश्च आश्रमाश्च इतरे च वर्णाश्रमेतरे । वर्णाश्रमेतराः । ***व्यधिकरणे बहुव्रीहौ मध्यमपदलोपो वक्तव्यः*** । कुमुदस्य गन्ध इव गन्धो यस्य स कुमुदगन्धिः ॥ २१ ॥

## उपमानाच्च । २२ ।

उपमानात्परस्य गन्धशब्दस्येकारो भवति । हंसस्य गमनमिव गमनं यस्याः सा हंसगमना ॥ २२ ॥

## दिक्संख्ये संज्ञायाम् । २३ ।

दिग्वाचकसङ्ख्यावाचकशब्दौ संज्ञायां विषये परपदतुल्यार्थे समस्येते स समासस्तत्पुरुषो भवति । संज्ञायामित्यनेन नित्यसमासो दर्शितः । अविग्रहो नित्यसमासः, अस्वपदविग्रहोऽपि । दक्षिणाग्निः । सप्तग्रामः ॥ २३ ॥

## इति समासाः ।

---

१ **व्यधीति** । वैयधिकरण्य इति क्वचित्पाठः । भिन्नविभक्त्यन्तपदवाच्यत्व वैयधिकरण्यम् । गन्धपदस्य मध्यवर्तिनो लोपे इवेत्यस्योक्तार्थत्वादप्रयोगः । चकाराद्गन्धशब्दस्येकारान्तादेशः ।

२ **दिक्सङ्ख्ये इति** । दिग्वाचकसङ्ख्यावाचकशब्दावित्यर्थः । संज्ञायामित्यनेन नित्यसमाससूचनात्तल्लक्षणमाह—**अविग्रह इति** ।

# अथ तद्धितो निरूप्यते ।

## अपत्येऽण् । १ ।

नाम्नोऽपत्येऽर्थे अण् प्रत्ययो भवति । उपगोरपत्यमिति वाक्ये उपगु अण् इति स्थिते 'समासप्रत्यययोः' इति षष्ठीलोपः । णकारो वृद्ध्यर्थः ॥ १ ॥

## आदिस्वरस्य ञ्णिति[3] च वृद्धिः । २ ।

स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति ञिति णिति तद्धिते च परतः । उकारस्य औकारो वृद्धिः ॥ २ ॥

## वोऽव्यस्वरे । ३ ।

उकारस्यौकारस्य च अव् भवति यकारे स्वरे च परे । औपगवः । वासिष्ठः । गौतमः । ***शिवादिभ्यश्चाण् वक्तव्यः** । शैवः । वैदेहः ।

---

१ **अर्थेति** । तद्धिते इति जात्यभिप्रायेणैकवचनम् । तेभ्यः-पूर्वोक्तेभ्यो नामपदेभ्योऽर्थान्तरप्रतिपादनशक्तिप्रदत्वेन हितोऽनुकूलस्तद्धित इत्यन्वर्थसंज्ञाविज्ञानात्तद्धितसंज्ञाऽणादीनामिति भावः ।

२ **आदिस्वरस्य इति** । आदौ स्वरः-आदिस्वरः । आदिर्त्व स्वरापेक्षयेत्यभिप्रेत्योक्तं-**स्वराणां मध्ये इत्यादि** । ततश्च वासिष्ठ इत्यादौ वृद्धिः । तदपि सम्भवदभिप्रायम् । ततश्च एः कामस्यापत्यमाय इत्यादावाद्यन्तवदेकस्मिन्निति आदित्वाद्भवत्येव वृद्धिः ।

३ ञ् च ण् च ञ्णौ । ञ्णावितौ यस्य स ञ्णित् , तस्मिन् ञ्णिति । **तद्धिते परत इति** । तद्धितप्रकरणत्वात् । उकारौकारयोः स्थानादिनाऽन्तरतमत्वादौकारो वृद्धिरित्यर्थः ॥

४ **वोऽव्यस्वरे इति** । उश्च ओश्च वो इति षष्ठीद्विवचनान्तम् । यश्च स्वरश्चेति समाहारः ।

**ऋ उरणि । ४ ।**

ऋकारस्य उर्भवति अणि परे ॥ ४ ॥

**षषो णो मातरि । ५ ।**

षषः षकारस्य नकारादेशो भवति मातृशब्दे परे । षाण्मातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः ॥ ५ ॥

**अत इञ्नृषेः । ६ ।**

अकारान्तात् नाम्नोऽनृषिशब्दादपत्येऽर्थे इञ् प्रत्ययो भवति । "यस्य लोपः" । देवदत्तस्यापत्यं दैवदत्तिः । श्रीधरस्यापत्यं श्रैधरिः । दशरथस्यापत्यं दाशरथिः । पुरन्दरस्यापत्यं पौरन्दरिः ॥ ६ ॥

**बह्वादिभ्यश्च । ७ ।**

बह्वादिभ्यः परे इञ् प्रत्ययो भवत्यपत्येऽर्थे । बह्वोरपत्यं बाह्वविः । औपगविः । कार्ष्णिः । औडुलोमिः । अग्निशर्मिः ॥ ७ ॥

---

१ **ऋ उरिति** । षण्णां मातॄणामपत्यमिति विग्रहे अणि सङ्ख्यापूर्वकत्वात्तद्धितार्थविषयत्वाच्च द्विगुसमासे विभक्तिलोपे पदान्तत्वमाश्रित्य षोड- इति डत्वे मृन्मयं दृषन्मयमित्यादाविव ञमे ञमा वेत्यत्र चपा अबे जबा इत्यतो जबा इत्यनुवृत्तेः । क्वचिज्जबा ञमे परे ञमा भवन्तीति जबस्य डकारस्य सवर्णत्वात् ञमे ञमो णकारः ।

अन्ये तु हसेर्हस इति षस्य द्वित्वे खसपरत्वेन पूर्वषस्य षोड इति डत्वे खसे चपा इति चपे टकारे संयोगान्तलोपे च निमित्ताभावन्यायस्यानित्यत्वात् ञमे ञमा वेति टस्य ण इत्याहुः ॥

**ण्यायनणेयण्णीया[1] गर्गनडात्रिस्त्रीपितृ-**

**ष्वस्रादेश्च । ८ ।**

गर्गादेर्नडादेरत्र्यादेः स्त्रीलिङ्गात् पितृष्वस्रादेश्च ण्य आयनण् एयण् णीय इत्येते प्रत्यया भवन्ति अपत्येऽर्थे । गर्गस्यापत्यं गार्ग्यः । वत्सस्यापत्यं वात्स्यः । नडस्यापत्यं नाडायनः । चरस्यापत्यं चारायणः । अत्रेरपत्यमात्रेयः । गङ्गाया अपत्यं गाङ्गेयः । मह्या अपत्यं माहेयः । कपेरपत्यं कापेयः । ***मातृपितृभ्यां स्वसुः सस्य षत्वं वक्तव्यम्** । मातृष्वस्रीयः । पैतृष्वस्रीयः ।

**अलुक्क्वचित् । ९ ।**

क्वचित् समासनिमित्तकविभक्तेर्लुङ्न । अमुष्य अपत्यम् अमुष्यायणः ॥ ९ ॥

**पितृमातृभ्यां व्यडुलौ । १० ।**

पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः ॥ १० ॥

**पितुर्डामहन् । ११ ।**

पितुः पिता पितामहः । पितुर्माता पितामही ॥ ११ ॥

---

१ **ण्यायनणिति** । ण्यश्च आयनण् च एयण् णीयश्च ते तथा । गर्गश्च नडश्च अत्रिश्च स्त्री च पितृष्वसा च ता आदौ यस्य स तथा । द्वन्द्वान्तत्वादादिशब्दस्य प्रत्येकं सम्बन्ध इत्यभिप्रेत्याह—**गर्गादेरित्यादि** । गर्गादेर्गणाण्ण्यः । नडादेर्गणादायनण् । अत्र्यादेर्गणात्स्त्रीलिङ्गाच्च एयण् । पितृष्वस्रादेर्गणाण्णीयः, एयण् च ।

**लुग्बहुत्वे क्वचित् । १२ ।**

अपत्येऽर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे सति क्वचिदृष्यनृषि-विषये लुग् भवति । गर्गाः । वसिष्ठाः । अत्रयः । विदेहाः ॥१२॥

**देवतेदमर्थे । १३ ।**

देवतार्थे इदमर्थे चोक्ताः प्रत्यया भवन्ति । इन्द्रो देवता अस्येति ऐन्द्रं हविः । सोमो देवता अस्येति सौम्यम् । देवदत्तस्य इदं दैवदत्तं वस्त्रम् ॥ १३ ॥

**क्वचिदद्वयोः । १४ ।**

पूर्वपदोत्तरपदयोः क्वचिद्वृद्धिर्भवति । अग्निमरुतौ देवते अस्येति आग्निमारुतं कर्म । सुहृदो भावः सौहार्दम् । अत्र ***भावे अण् वक्तव्यः*** ।

---

१ **लुग्बहुत्वे क्वचिदिति** । गर्गयस्कविदादिभृग्वत्रिकुत्साङ्गिरोवसिष्ठगौतमदेशतुल्यक्षत्रियेभ्यः परस्य प्रत्ययस्य बहुत्वविषये लुग्भवतीत्यर्थः । **देवते इति** । देवता च इदं च देवतेदमौ, देवतेदमोरर्थः देवतेदमर्थस्तस्मिन् उक्ता अणादयो यथायोग्या भवन्तीत्यर्थः ॥

२ **क्वचिदिति** । आदिस्वरस्येत्यत्र पदापेक्षया आदित्वःविशेषाद्द्वयोः पूर्वपदादेरुत्तरपदादेश्च वृद्धिर्भवतीत्यर्थः । अग्निमरुतौ देवते अस्य तत् आग्निमारुतम् । कर्मेति विशेष्यपदम् । सुहृदो भावः, सुभगस्य भाव इति विग्रहे भावार्थे प्रत्ययानभिधानादत्र भावेऽण् वक्तव्य इति वक्तव्यत्वात्स्वार्थेऽपीत्यपिशब्दादनुक्तसमुच्चयार्थाद्वा विकाराभावसमूहादावणि सिद्धेरत्रापि तेनैव वक्तव्यो व्याख्येयः ।

**णितो वा । १५ ।**

उक्ता प्रत्यया विषयान्तरे णितो वा भवन्ति । अजो गौर्यस्य सः अजगुः शिवस्तस्येदं धनुः आजगवम्, अजगवं वा । कुमुदस्य गन्ध इव गन्धो यस्य स कुमुदगन्धिस्तस्यापत्यं स्त्री कौमुदगन्ध्या । 'आवतः स्त्रियाम्' इत्याप् प्रत्ययः । श्वशुरस्यायं ग्रामः श्वाशुर्यः । विष्णोरिदं वैष्णवम । गोरिदं गव्यम् । कुलस्येदं कुल्यम् ॥ १५ ॥

**त्वन्मदेकत्वे । १६ ।**

तव इदं त्वदीयम् । मम इदं मदीयम् ॥ १६ ॥

**चतुरश्चलोपः । १७ ।**

चतुरशब्दस्य चकारस्य लोपो भवति ण्यणीययोः परतः । तुर्यः, तुरीयः ॥ १७ ॥

**अन्यस्य दक् । १८ ।**

अन्यशब्दस्य दगागमो भवति णीयप्रत्यये परे । अन्यस्य इदं अन्यदीयम् । अर्द्धजरत्या इदं अर्धजरतीयम् ॥ १८ ॥

---

१ **णित इति** । प्रागुक्ता अणादयः प्रत्यया विषयान्तरे मुख्यविषयादपत्यादिरूपादन्यस्मिन् विषये इदमर्थादौ णितो णित्कार्यकृता वा भवन्तीत्यर्थः ।

२ **चतुरश्चलोप इति** । चतुर्शब्दस्य यश्चकारस्तस्येत्यर्थः । ण्यणीययोः परतो लोपो वक्तव्य इत्यर्थः । चतुर्णां सङ्ख्यापूरण इति विग्रहे स्वार्थेऽपीत्यपिशब्दात्पूरणार्थे ण्यणीयौ, तयोश्च णित्वाऽभावादादिवृद्ध्यभावः ।

३ **अन्यस्य दगिति** । अन्यशब्दाण्णीये दगागमो वक्तव्यः । स्त्रीत्वादन्ते । अन्यस्येदमिति विग्रहः ॥

**कारकात्क्रियायुक्ते । १९ ।**

कारकादप्येते प्रत्यया भवन्ति क्रियायुक्ते कर्तरि कर्मणि चाभिधेये । कुङ्कुमेन रक्तं वस्त्रं कौङ्कुमम् । मथुराया आगतो माथुरः । ग्रामे भवः ग्राम्यः । धुरं वहतीति धुर्यः, धौरेयः ॥ १९ ॥

**केनेयेकाः । २० ।**

कः इन, इय, इक, इत्येते प्रत्यया भवन्ति भवाद्यर्थेषु । णित्त्वं चैषां वैकल्पिकम् । कर्णाटे भवः कार्णाटकः, कर्णाटको वा । ग्रामादागतस्तत्र जातो वा ग्रामीणः, ग्राम्यः । सध्रीचि भवः सध्रीचीनः । समीचि भवः समीचीनः । तिरश्चि भवः तिरश्चीनः ॥ २० ॥

---

१ **कारकादिति** । क्रिया—धात्वर्थस्तद्युक्तस्तदाश्रयः । स च क्वचित्कर्ता । क्वचिच्च कर्म । यथा देवदत्तो ग्रामं गच्छतीत्यत्र गमनक्रियाश्रयो देवदत्तः । देवदत्त ओदनं पचतीत्यादौ च विक्लित्तिरूपायाः पचनक्रियाया आश्रयः कर्मभूतौदन इत्यभिप्रेत्य कर्तरि कर्मणि चाभिधेये इत्युक्तम् । यत्क्रियायुक्ते कर्तृकर्मणी तत्क्रियाकारकादणादयो भवन्ति । तद्धितान्तस्य चैते एव वाच्ये भवेतामित्यर्थः । कौङ्कुममित्यत्र रञ्जनक्रियायाः करणकारणात् कुङ्कुमाद्रञ्जनक्रियायुक्ते वस्त्रेऽभिधेयेऽण् । धुरमिति कर्मकारकाद्वहनक्रियायुक्ते कर्तर्यनडुहि वाच्ये य एयण् । णितो वेति व्यवस्थितो णित्वाभावादादिवृद्ध्यभावः ।

१ **केनेति** । कश्च इनश्च इयश्च इकश्च ते केनेयकाः । **णित्वं चैषां वैकल्पिकमिति** । णितो वेत्यस्यात्रानुवृत्तेरिति भावः । सध्र्यङ्ङेव सध्रीचीनः । सम्यगेव समीचीनः । स्वार्थे ईनप्रत्यये तद्धिते परे अञ्चेर्दीर्घश्चेत्यकारलोपपूर्वकारदीर्घौ । तिरश्चीन इत्यत्र तिरश्चादय इति तिरश्च निपातः ॥

## यलोपश्च[१] । २१ ।

कन्यादीनामुपधायाः क्वचिद्यकारस्य लोपो भवति । कन्याया जातः कानीनः । ***नक्षत्रादण् वक्तव्यः*** । पुष्येण युक्ता पौर्णमासी पौषी । पौष्यां भवः पौषीणः ॥ २१ ॥

## इयो वा । २२ ।

क्षत्रशब्दाद्वा इय प्रत्ययो भवति । क्षतात् त्रायते इति क्षत्रम् । क्षत्रात् भवः क्षत्रियः, क्षात्रः । शुक्रात् जातं शुक्रियम् । इन्द्राज्जातमिन्द्रियम् । अक्षैर्दीव्यतीति[२] आक्षिकः । शब्दं करोतीति शाब्दिकः । तर्कं करोतीति तार्किकः । वेदे जाता वैदिकी स्तुतिर्ऋग्वा ॥ २२ ॥

## किमादेस्त्यतनौ[३] । २३ ।

किमादेरद्यादेर्भवाद्यर्थेषु त्यतनौ प्रत्ययौ भवतः । कुत्र भवः कुत्रत्यः । कुतस्त्यः । ततस्त्यः । अद्य भवः अद्यतनः । ह्यो भवः ह्यस्तनः । श्वो भवः श्वस्तनः । सदा भवः सदातनः ।

---

१ **यलोपश्चेति** । क्वचित्तद्धिते परे यकारस्य लोपो वक्तव्य इत्यर्थः । कन्याया भव इति विग्रहे ईनः । यस्य लोप इत्यकारलोपः । आदिवृद्धिः । पुष्ये भवः पौषीणः । **इयो वेति** । क्षत्रशब्दाज्जातार्थेयः । क्षत्रं जातिः । क्षत्रियः । क्षात्रोऽन्यः । २ अक्षैर्दीव्यति शब्दान् करोति तर्कमधीते वेदं वेत्यादि विग्रहाः । वैदिकीत्यत्र तद्धादित्वादीप् ॥

३ **किमादेस्त्यतनाविति** । किमादेरिति किम्शब्द आदिः आद्यवयवो यस्य तत्प्रकारकाद्गणात् त्यः । स च अमाइहक्वतसित्रेभ्य एव । अमात्यः । इहत्यः । क्वत्यः । कुतस्त्यः । कुत्रत्यः—इत्यादि ।

***दक्षिणापश्चात्पुरसस्त्यण् वक्तव्यः*** । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ॥ २३ ॥

**स्वार्थेऽपि** । २४ ।

उक्ताः प्रत्ययाः स्वार्थेऽपि भवन्ति । देवदत्त एव देवदत्तकः । चत्वार एव वर्णाः चातुवर्ण्यम् । चोर एव चौरः । *** भागरूपनामभ्यो घेयः स्वार्थेऽपि *** । भागधेयम् । नामधेयम् ॥ २४ ॥

**[1]अणीनयोर्युष्मदस्मदोस्तवकादिः** । २५ ।

अणीनयोर्युष्मदस्मदोस्तवकादय आदेशा भवन्ति । तव इदं तावकम् । मम इदं मामकम् । तावकीनः । मामकीनः । यौष्माकः । आस्माकः । यौष्माकीणः । आस्माकीनः ॥ २५ ॥

**[2]वत्तुल्ये** । २६ ।

सादृश्येऽर्थे वत् प्रत्ययो भवति । चन्द्रेण तुल्यं चन्द्रवत् मुखम् । घटेन तुल्यं घटवत् उदरम् । पटवत् कम्बलम् ॥ २६ ॥

**[3]भावे तत्त्वयणः** । २७ ।

शब्दस्य प्रवृत्तिनिमित्तं भावस्तस्मिन् भावे त, त्वं, यण् इत्येते प्रत्यया भवन्ति । ब्राह्मणस्य भावो ब्राह्मणता । त्वयणौ नपुंसकलिङ्गौ

---

१ **अणीययोरिति** । अण् च ईनश्च अणीनौ तयोः परतो युष्मदस्मदोस्तवकादिः । एकत्वे तवकममकौ । द्वित्वबहुत्वयोर्युष्माकास्माकौ च वक्तव्यावित्यर्थः । २ **वदिति** । तृतीयान्तात् क्रियातुल्य इति व्याख्येयम् । तेन पुत्रेण तुल्यः स्थूलः गोमान्वा इत्यादौ गुणद्रव्यतुल्ये न ।

३ **भाव इति** । तश्च त्वश्च यण् च ते तत्त्वणः । भवत्यस्माच्छब्दप्रवृत्तिरिति भावशब्दस्यान्वर्थतामभिप्रेत्याह—**शब्दस्य प्रवृत्तिनिमित्तं भाव इति** । तच्च द्रव्यगुणक्रियाजातिरूपम् ।

भवतः । ब्राह्मणत्वं । ब्राह्मण्यम । सुमनसो भावः सौमनस्यम् । सुभगस्य भावः सौभाग्यम । विदुषो भावो वैदुष्यम् ॥ २७ ॥

**[1]समाहारे ता च त्रेर्गुणश्च । २८ ।**

त्रयाणां समाहारः त्रेता । जनानां समूहो जनता । देवता । **※[2]कर्म्मण्यपि यण् वक्तव्यः※** । ब्राह्मणस्य कर्म ब्राह्मण्यम् । राज्ञ इदं कर्म राज्यम् । राजन्यम् ॥ २८ ॥

**लो[3]हितादेर्डिनम् । २९ ।**

लोहितादेर्भावेऽर्थे इमन् प्रत्ययो भवति, स च डित् । डित्वाट्टिलोपः । लोहितिमा । अणोर्भावः अणिमा । लघोर्भावो लघिमा । महतो भावो महिमा ॥ २९ ॥

---

१ **समाहारे ता चेति** । चकारादनुक्तसमुच्चयार्थात्—हस्तिना समूहो हास्तिकम् । धैनुकमित्यादौ समूहे कः । तस्य च णितो वेति णित्वादादिवृद्धिः । तथा अपूपानां समूह आपूपिकम् । शाष्कुलिकमित्यादावन्नवाचकेभ्यः कण् । एव कवचिनां समूहः कावचिकम् । कदाराणा समूहः कैदारिकम्—कैदारकम् । कैदार्यमित्यत्र इककण्याः । तथा भिक्षादिभ्योऽण् । भिक्षाणां समूहो भैक्षम् । यौवनम् । तथा पाशादिभ्यो यत् । पाशानां समूहः पाश्या । वात्या । खल्या । गव्या । रथ्या । वातादूलः । वातूलः । तथा खलिनो गोत्ररथेभ्य इनित्रकट्येत्यादयः । खलानां समूहः खलिनी । गोत्रा । रथकट्येत्यादयः प्रयोगतो ज्ञेयाः । स्त्रीत्वादिकं लोकात् । गुणश्चेति विशेषार्थाच्चाकारात्त्रिशब्दस्यैव गुणः ॥

२ **कर्मण्यपीति** । अपिशब्दात्साध्वर्थेऽपि । सामसु साधुः सामन्यः । कर्मण्यः ।

३ **लोहितादेरिति** । 'भाव तत्त्वयण' इत्यनुवृत्तेस्तेऽपि । ततश्च लोहितता—लोहितत्वम्—लौहित्यमित्याद्यपि ॥

**ऋ र इमनि । ३० ।**

ऋकारस्य रेफो भवति इमनि परे । प्रथिमा । द्रढिमा । बहोर्भाव इति विग्रहे—॥ ३० ॥

**बहोर्लोपो भू च बहोः । ३१ ।**

बहोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति । बहोः स्थाने भू चादेशः । बहोर्भावो भूमा ॥ ३१ ॥

**[२]अस्त्यर्थे मतुः । ३२ ।**

नाम्नो मतुः प्रत्ययो भवति, अस्यास्मिन् वास्तीत्येतस्मिन्नर्थे । उकारो नुम्विधानार्थः । उितो नुम् । गोमान् । श्रीमान् । गोमती । श्रीमती । आयुष्मान् ॥ ३२ ॥

**[३]अइकौ च मत्वर्थे ॥ ३३ ॥**

मत्वर्थे अइकौ प्रत्ययौ भवतः । वैजयन्ती पताका अस्य अस्मिन् वा वैजयन्तः प्रासादः । माया विद्यते अस्यास्मिन् वा मायिकः ॥ ३३ ॥

---

१ **ऋ र इति** । वक्तव्यत्वेन प्रयोगानुसारित्वाद्भसादेर्लघोरित्येव । नेह—ऋजिमा । कृष्णिमा ॥

**अस्त्यर्थे इति** । अस्तेरर्थोऽस्त्यर्थो विद्यमानार्थस्तस्मिन्—अस्त्यर्थे । ततश्च प्रथमान्तान्नाम्नोऽस्त्युपाधिकान्मतुः अस्याऽस्मिन्वास्तीत्यर्थे ।

"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥"

ब्राह्मणवान् ग्रामः । उदरिणी कन्या । रूपवान्नटः । क्षीरिणो वृक्षाः । विद्यावान्नरः । दण्डीति क्रमेणोदाहरणानि ।

३ **अइकाविति** । अश्च इकश्च अइकौ । सन्ध्यभावोऽसन्देहार्थः । एवं प्रज्ञास्यास्ति प्राज्ञः । श्राद्धः । आर्थः । वृत्तिरस्यास्ति वार्त्त इत्यादौ णितो वेति व्यवस्थया णित्त्वम् । चकारादनुक्तसमुच्चयार्थात्प्रयोगानुसारेणान्ये-

**मान्तोपधाद्वत्विनौ । ३४ ।**

मकारान्तान्मकारोपधादकारान्तादकरोपधाच्च वत्विनौ प्रत्ययौ भवतोऽस्त्यर्थे । किंवान् । लक्ष्मीवान् । भगवान् । धनी । छत्री । दण्डी । दृषद्वती भूमिः । शमी । कामी ॥ ३४ ॥

**तडिदादिभ्यश्च । ३५ ।**

तडिदादिभ्यः शब्देभ्यो वतुप्रत्ययो भवति । तडित्वान् । विद्युत्वान् । मरुत्वान् ॥ ३५ ॥

**एतत्किंयत्तद्भ्यः[2] परिमाणे वतुः । ३६ ।**

एतत्किंयत्तच्छब्देभ्यः परिमाणेऽर्थे वतुप्रत्ययो भवति ॥ ३५ ॥

**यत्तदोरा । ३७ ।**

यत्तदोष्टेरात्वं भवति वतौ परे । यत्परिमाणमस्यास्तीति यावान् । तावान् ॥ ३७ ॥

**किमः[3] कियश्च । ३८ ।**

किम्शब्दस्य किरादेशो भवति वतौ परे । चकारान्मस्य वाकरस्य च यकारो भवति । कियान् ॥ ३८ ॥

---

भ्योऽपि । यथा फलबर्हरथेभ्य इनः । फलमस्यास्तीति फलिनः । बर्हिणः । रथिन इत्यादीति प्रसादकृतः ।

१ **मान्तोपधादिति** । मश्च अश्च मौ, मौ अन्ते उपधायां च यस्येति व्यधिकरणबहुव्रीहिः । वतुप्रत्ययः सामान्येन भवति, इन्प्रत्ययस्त्वकारान्तादेवेति विवेकः । दृषद्वानित्यवर्णोरथोदाहरणम् । वतोरुकारानुबन्धित्वादीप् । **किंवान् लक्ष्मीवानिति** मकारान्तमकारोपधयोरुदाहरणे ।

२ **एतत्किंयत्तद्भ्य इति** । एभ्यः परिमाणेऽर्थे वतुप्रत्ययो वक्तव्यः । मान्तोपधादित्यनेनैव सिद्धे परिमाणार्थं वचनम् ॥

३ **किम इति** । किमः किरादेशो वक्तव्यः । चकाराद्वतोर्वस्य यादेशश्चेत्यर्थः । यत्तत्किं वा परिमाणमस्येति विग्रहे इयानित्यत्र चकाराद्यः ॥

## आ इश्चैतदो वा । ३९ ।

वतुप्रत्यये परे एतच्छब्दस्य आ इश् इत्येतावादेशौ वा भवतः । "गुरुः शिच्च" इति शित्त्वात्कृत्स्नस्य आ इति प्राप्तस्तथापि चकारादन्त्यस्यैव टेराकारादेशो भवति न कृत्स्नस्य । यस्मिन् पक्षे आ इशादेशस्तस्मिन् पक्षे प्रत्ययस्य यकारादेशो भवति । एतावान् । इयान् ॥ ३९ ॥

## तुन्दादेरिलः । ४० ।

तुन्दादेरिलप्रत्ययो भवति अस्त्यर्थे । तुन्दमस्यातीति तुन्दिलः ॥ ४० ॥

## औन्नत्ये दन्तादुरः । ४१ ।

औन्नत्येऽर्थे वाच्ये सति दन्तशब्दादुरः प्रत्ययो भवति । उन्नता दन्ता यस्य सः दन्तुरः । ( **ऐश्वर्येऽर्थे स्वादामिन्** ) । स्वामी । ( **गन्धादेरिः** ) । सुगन्धिः । आमगन्धिः ॥ ४१ ॥

## श्रद्धादेर्लुः । ४२ ।

श्रद्धादेर्गणाल्लुप्रत्ययो भवति । श्रद्धाऽस्यास्तीति श्रद्धालुः । दयालुः । कृपालुः । *** अस्मायामेधास्रग्भ्योऽस्त्यर्थे विन्- वक्तव्यः *** । तपोऽस्यास्तीति तपस्वी । यशस्वी । मायावी । स्रग्वी ॥ ४२ ॥

---

१ **अस्मायेति ।** 'अस्माये'त्यत्राऽसः प्रत्ययत्वात्प्रत्ययग्रहणेन तदन्तस्येति असप्रत्ययान्तान्मायादेश्चेत्यर्थः ॥

**वाचो ग्मिनिः । ४३ ।**

वाच्शब्दात् ग्मिनिः प्रत्ययो भवति अस्त्यर्थे । प्रशस्ता वाग् विद्यते यस्यासौ वाग्मी ॥ ४४ ॥

**आलाटौ कुत्सितभाषिणि । ४४ ।**

कुत्सितभाषिण्यर्थे वाच्ये सति आलाटौ प्रत्ययौ भवतः । कुत्सिता वाग् विद्यते यस्यासौ वाचालः । वाचाटः ॥ ४४ ॥

**ईषदपरिसमाप्तौ कल्पदेश्यदेशीयाः । ४५ ।**

ईषदपरिसमाप्तः सर्वज्ञः सर्वज्ञकल्पः । पटुदेश्यः । कविदेशीयः ॥ ४५ ॥

**प्रशंसायां रूपः । ४६ ।**

श्लाघायां वाच्यायां रूपः प्रत्ययो भवति । प्रशस्तो वैयाकरणो वैयाकरणरूपः ॥ ४६ ॥

**पाशः कुत्सायाम् । ४७ ।**

कुत्सितो वैयाकरणो वैयाकरणपाशः ॥ ४७ ॥

**भूतपूर्वे चरट् । ४८ ।**

भूतपूर्वेऽर्थे वाच्ये सति चरट् प्रत्ययो भवति । दृष्टचरः । दृष्टचरी ॥ ४८ ॥

---

१ **वाच इति** । वाक्शब्दादस्त्यर्थे ग्मिनिः प्रत्ययो वक्तव्यः । ग्मिनेर्गकारो ऽमादित्वव्यावृत्त्यर्थः । अथवा वाचो ग्मिनिरिति च्छेदे वाचो मिनिप्रत्ययः वाचश्च गकारोऽन्तादेशश्चेति वक्तव्यः । एवं च वाच इत्यस्योपलक्षणाद्गोमीत्यादावपि । **आलाटाविति** । कुत्सितमनन्वितं भाषितुं शीलमस्य कुत्सितभाषी, तस्मिंस्तद्धितान्तवाच्ये विवक्षित इत्यर्थः । ईषदपरिसमाप्तिः—किञ्चिन्न्यूनत्वम् । प्रशंसा—प्राशस्त्यं । स्तुतिरिति यावत् । पूर्वं भूतः प्राक् ज्ञात इति यावत् ।

**प्राचुर्यविकारप्राधान्यादिषु मयट् । ४९ ।**

अन्नं प्रचुरं यस्मिन् सः अन्नमयो यज्ञः । मृण्मयो घटः । स्त्रीमयो जाल्मः । अमृतमयश्चन्द्रः । ***तदधीते वेद वेत्यत्राण् वक्तव्यः*** । व्याकरणमधीते वेद वा वैयाकरणः । शोभनः अश्वः स्वश्वः । तं वेदेति वा ॥ ४९ ॥

**न सन्धिय्वोरियुट् च । ५० ।**

सन्धिजौ य्वौ सन्धिय्वौ, तयोः सन्धिजयोर्यकारवकारयोः सम्बन्धिनः स्वरस्य वृद्धिर्न भवति, किन्तु तयोर्युडागमो भवति । इट् उट् इत्येतावागमौ भवतः । वर्णविश्लेषं कृत्वा यकारात्पूर्वमिकारः । वकारात्पूर्वमुकारः । ***स्वरहीनं परेण संयोज्यम्*** । आदिस्वरस्य ञ्णिति च वृद्धिः । वैयाकरणः । सौवश्वः ॥ ५० ॥

---

१ **प्राचुर्येति** । प्राचुर्यं च विकारश्च प्राधान्यादिश्च ते तथा तेषु वाच्येषु मयट्प्रत्ययो वक्तव्य इत्यर्थः । प्रचुरस्य भावः प्राचुर्यं, बाहुल्यमित्यर्थः । अन्नप्रचुरोऽन्नमयः । मृदो विकारः मृन्मयः । स्त्रीप्रधानो जाल्मोऽसमीक्ष्यकारी ।

२ **अमृतमयश्चन्द्र इति** । अमृतरूप इत्यर्थः ।

३ **तदिति** । अधीते पठति तद्वेद जानाति वा इत्यर्थे अण् वक्तव्य इत्यर्थः । व्याकरणाऽश्वशब्दाभ्यामणि णित्वात् वृद्धिप्राप्तावपवादमाह— **न सन्धिय्वोरिति** । सन्धेः संबन्धिनौ य्वौ सन्धिय्वौ । संबन्धश्च जन्यजनकभाव एवेति विगृह्य व्याचष्टे—**सन्धिजौ य्वावित्यादि** । इश्च उश्च । टकारो द्वन्द्वान्तत्वादुभाभ्यामन्वेति । अत एवेट् उट् इत्यतावागमौ भवत इति । तौ च सन्धिय्वोरेव यथासंख्येन । ततश्च व्याकरण इत्यत्र यकारस्य सन्धिजत्वाद्यकारवकारयोर्विश्लेषं कृत्वा सन्धिजाद्यकारात्पूर्वमिकारः । एवं यकारवकारयोर्विश्लेषं कृत्वा वकारात्पूर्वमुकार इत्यर्थः ।

## इतो जातार्थे । ५१ ।

जातार्थे इतः प्रत्ययो भवति । लज्जा सञ्जाता यस्यासौ लज्जितः । पण्डितः । तृषितः ॥ ५१ ॥

## तरतमेयस्विष्ठाः प्रकर्षे । ५२ ।

अतिशयेऽर्थे तर तम ईयसु इष्ठ इत्येते प्रत्यया भवन्ति। अतिशयेन कृष्णः[1] कृष्णतरः । अतिशयेन शुक्लः शुक्लतमः । ***ईयस्विष्ठौ डिताविनि वक्तव्यौ*** । डिति टेर्लोपः । उकारो नुम् विधानार्थः । 'नूसम्महत' इति दीर्घः । अतिशयेन लघुः लघिष्ठः । लघीयसी । लघीयान् । अतिशयेन पापः पापिष्ठः । पापीयान् । पापीयसी ॥ ५२ ॥

## गुर्वादेरिष्ठेमेयस्सु गरादिष्टिलोपश्च । ५३ ।

इष्ठेमेयस्सु परतो गुर्वादेर्गरादिरादेशो भवति टेर्लोपश्च । १ गुरु २ प्रिय ३ स्थिर ४ स्फिर ५ उरु ६ बहुल ७ वृद्ध ८ दीर्घ ९ प्रशस्य १० बाढ ११ युवन् १२ अल्प १३ स्थूल १४ दूर १५ अन्तिकानां—क्रमेण १ गर २ प्रं ३ स्थ ४ स्फ

---

१ **इत इति** । अस्य जातमित्यर्थे इतप्रत्ययो वक्तव्य इत्यर्थः । लज्जा जाताऽस्य लज्जितः । एवं तारकितं नभः । पल्लवितो वृक्ष इत्यादि ज्ञेयम् ।

२ **गुर्वादेरिति** । अतिशयेन प्रियः प्रेष्ठः । प्रियस्य भावः प्रेमा । प्रियस्य प्रादेशः स्थूलस्य स्थवादेशः । अतिशयेन स्थिरः—स्थेयान्—स्थेष्ठः—स्थेमा । स्फिरः—स्फेष्ठः—स्फेयान् । उरुः—वरिष्ठः—वरीयान्—वरिमा । बहुलः-बंहिष्ठः—बंहीयान्—बंहिमा । वृद्धः--वर्षिष्ठः—वरीयान् । तृप्तः-त्रपिष्ठः-त्रपीयान् । वृन्दारकः—वृन्दिष्ठः—वृन्दीयान् । दूरः—दविष्ठः—दवीयान् । युवा—

५ वर् ६ बंहि ७ ज्या ८ द्राघ ९ श्र १० साध ११ यव १२ कन १३ स्थव १४ दव १५ नेद एते आदेशा भवन्ति। अतिशयेन गुरुः गरीयान्। गरिष्ठः। गुरोर्भावो गरिमा। अतिशयेन प्रियः प्रेयान् प्रेष्ठः प्रेमा। अतिशयेन स्थिरः स्थेयान् स्थेष्ठः स्थेमा। अतिशयेन उरुः वरीयान् वरिष्ठः। अतिशयेन स्थिरः स्फेयान्। अतिशयेन बहुलः बंहीयान् बंहिष्ठः। अतिशयेन वृद्धः। ( **[1] ईलोपो ज्याशब्दादीयसः** )। ज्यायान् ज्येष्ठः। अतिशयेन दीर्घः द्राघीयान् द्राघिष्ठः, द्राघीयसी द्राघिमा। प्रशस्यस्य श्रादेशः। श्रेयान् श्रेष्ठः। अतिशयेन बहुः भूयिष्ठः। दूरस्य दवादेशः, दविष्ठः दवीयान् दवीयसी। क्षिप्रशब्दस्य क्षेपादेशः। क्षेपिष्ठः क्षेपीयान्। क्षुद्रशब्दस्य क्षोदादेशः। क्षोदीयान्॥ ५३॥

## बहोरिष्ठे यिः। ५४।

बहोरुत्तरस्येष्ठप्रत्ययस्येकारस्य यिर्भवति बहोः स्थाने भूश्चादेशः, ईयसश्च ईलोपः। अतिशयेन बहुः भूयिष्ठः भूयान्। भूयसी भूमा। ***किमोऽव्ययादाख्याताच्च तरन्मयोराम् वक्तव्यः**। कुतस्तरां परमाणवः। कुतस्तमां तेषामारम्भकत्वम्। उच्चैस्तरां गायति। पठतितमाम्। पचतितमाम्॥ ५४॥

---

यविष्ठः-यवीयान्। ह्रस्वः ह्रसिष्ठः ह्रसीयान् ह्रसिमा। क्षिप्रः क्षेपिष्ठः क्षेपीयान्-क्षेपिमा। क्षुद्रः-क्षोदिष्ठः-क्षोदीयान्-क्षोदिमा। अन्तिकः-नेदीयान्-नेदिष्ठः। बाढः—साधीयान्—साधिष्ठः। युवाल्पयोः कन् वा। कनिष्ठः—कनीयान्। इत्यादयो यथाप्रयोगं ज्ञेयाः। १ **ईलोप इति**। प्रशस्यवृद्धयोर्ज्यादेशः, तस्माज्ज्याशब्दादीयस ईकारस्य लोपो वक्तव्य इत्यर्थः। प्रशस्यस्य ज्यादेशः।

**अव्ययसर्वनाम्नामकच्प्राक्टेः । ५५ ।**

उच्चकैः । यकः । सकः । सर्वकः ॥ ५५ ॥

**[1]परिमाणे दघ्नादयः । ५६ ।**

परिमाणेऽर्थे दघ्नच् द्वयसच् मात्रच् इत्येते प्रत्यया भवन्ति । जानुदघ्नं जलम् । शिरोद्वयसम् । पुरुषमात्रम् । ***द्वयोर्बहूनां चैकस्य निर्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ*** । कतरो भवतां काण्वः । कतमो भवतां तान्त्रिकः । भवतोर्यतरस्तार्किकस्ततर उद्गृह्णातु ॥ ५६ ॥

**[2]संख्येयविशेषावधारणे द्वित्रिभ्यां तीयः । ५७ ।**

द्वयोः संख्यापूरकः द्वितीयः ।

***त्रेःसम्प्रसारणम्*** । त्रयाणां संख्यापूरकः तृतीयः ॥५७॥

**षट्चतुरोस्थट् । ५८ ।**

षष्ठः । चतुर्थः ॥ ५८ ॥

**[3]पंञ्चादेर्मट् । ५९ ।**

पञ्चमः । सप्तमः । अष्टमः । नवमः ॥ ५९ ॥

१ **परिमाण इति** । दघ्नद्वयसमात्रादयः । तत्र दघ्नद्वयसावूर्ध्वं माने, मात्रस्त्वविशेषेण ।

२ **सङ्ख्येयविशेषेति** । सङ्ख्यातुमर्हं—सङ्ख्येयम् । तस्य विशेषः—तत्पूरकस्तस्याऽवधारण इत्यर्थः । द्वयोः सङ्ख्ययोः पूरकः । संप्रसारणम् । सस्वरस्य रेफस्य ऋकारः । **षट्चतुरोरिति** । षट्चतुर्शब्दाभ्यां सङ्ख्येयविशेषावधारणे थट्प्रत्ययो वक्तव्यः ।

३ **पञ्चादेरिति** । सङ्ख्येयविशेषावधारणे इति सर्वत्रानुवर्तते । पञ्चादेर्दशपर्यन्तान्मप्रत्ययः । सप्तमः । अष्टमः । नवमः । दशमः ।

**विंशत्यादेर्वा तमट् । ६० ।**

विंशतितमः । विंशतिः ॥ ६० ॥

**विंशतेस्तिलोपो डिति । ६१ ।**

विंशः । विंशतमः ॥ ६१ ॥

**शतादेर्नित्यम् । ६२ ।**

शततमः ॥ ६२ ॥

**एकादशादेर्डः । ६३ ।**

एकादशः । **द्वित्र्यष्टानां द्वात्रयोऽष्टाः** । द्वादशः । त्रयोदशः । अष्टादशः ॥ ६३ ॥

**कतिकतिपयाभ्यां थः । ६४ ।**

कतिथः । कतिपयथः ॥ ६४ ॥

**संख्यायाः प्रकारे धा । ६५ ।**

द्विप्रकारं द्विधा । चतुर्धा । **गुणोऽण्[2] च** । द्वेधा । त्रेधा । णित्त्वाद्वृद्धिः । यस्य लोपः ॥ ६५ ॥

**अतोऽम् । ६६ ।**

द्वैधम् । त्रैधम् ॥ ६६ ॥

**क्रियायां[3] आवृत्तौ कृत्वस् । ६७ ।**

पञ्चकृत्वः । सप्तकृत्वः ॥ ६७ ॥

---

१ **एकादशादेरिति** । निपातनादेकशब्दस्य दशशब्दे परे आत्वम् । एवं द्वादशेत्यादौ ।

२ **गुणोऽण् चेति** । धाप्रत्यये परे गुणो भवति । गुणविधिसामर्थ्याच्चकाराद्वा गुणाऽभावपक्षे धाप्रत्ययान्तादाण् चकारो विकल्पार्थः ।

३ क्रियाया आवृत्तौ क्रियाभ्यावृत्तिगणने सङ्ख्यावाचकात्कृत्वस्वक्तव्य इत्यर्थः ।

**द्वित्रिभ्यां सुः । ६८ ।**

द्विः, त्रिरुक्तम् ॥ ६८ ॥

**बह्वादेः शस् । ६९ ।**

बहुशः । शतशः ॥ ६९ ॥

**तयायटौ[2] संख्यायाम् । ७० ।**

द्वितयम् । द्वयम् । त्रितयम् । त्रयम् ॥ ७० ॥

**शेषा निपाताः कत्यादयः । ७१ ।**

का संख्या येषां ते कति ॥ ७१ ॥

*** इति तद्धितप्रकरणम् ***

इति श्रीमदनुभूतिस्वरूपाचार्यविरचिते सारस्वतव्याकरणे पूर्वार्धं सम्पूर्णम्।

---

पञ्च वारानिति पञ्चकृत्वः । द्वित्रिभ्यां सुरित्यत्रापि क्रियावृत्तावित्येव **बह्वादेरिति** । बह्वादेः कारकादित्यर्थस्तेन बहूना स्वामीत्यादौ न। अत्रापि क्रियाभ्यावृत्तिगणन एव । भूरिशः । गणशः । स्तोकशः । अल्पशः । अनेकश इत्यादि ॥

२ **तयायडाविति** । तयश्च अयट् च तयाऽयडौ, सङ्ख्याया अवयवत्वविवक्षायां भवत इत्यर्थः । द्वाववयवौ त्रयो वावयवा इति विग्रहः । द्वितयी । त्रितयीत्यत्र नदादित्वादीप् ।

**शेषा इति** । निपातात् साधवो निपात्याः । किमः सङ्ख्यापरिप्रश्ने डतिः । का संख्यैषां कति । एवं यति । तति इत्यादि शिष्टप्रयोगादूह्यमिति प्रसादकृतो वासुदेवभट्टाः ।

**गुणाश्चेत्पूर्वविदुषां, दोषाश्चेन्मन्मतिभ्रमात् ।**
**निरस्य दूषणग्रामं, गुणान् गृह्णन्तु सूरयः ! ॥ १॥**
**चन्द्रकीर्त्तिप्रसादादिटीकाभ्यः सारमादरात् ।**
**उद्धृत्य रचिता टीका बालधीवृद्धिसिद्धये ॥ २ ॥**

इति श्रीगुरुप्रसादशास्त्रिसङ्कलिता चन्द्रकीर्त्यादिसङ्क्षेपभूता सरलाख्या विवृत्तिः ।

# श्रीगुरुप्रसादशास्त्रिकृत पुस्तकें

कमीशन २५) सैकड़ा

| | |
|---|---|
| लघुशब्देन्दुशेखर—( अव्ययीभावान्त ) परीक्षोपयोगी ६ टीका मूल्य | २०) |
| वैयाकरणभूषणसार—'काशिका' और 'दर्पण' टीका | १०) |
| स्वप्नवासवदत्तानाटक—'अभिनवराजलक्ष्मी' भा० टी० | २॥) |
| पञ्चतन्त्र—( सम्पूर्ण ) 'अभिनवराजलक्ष्मी' टी० व प्रश्नपत्रसहित | ३ |
| तर्कसंग्रह—'अभिनवराजलक्ष्मी' 'परिमलदीपिका' टीका | १) |
| तर्कसंग्रह—( प्रथमापरीक्षा ) 'बालमनोरमा' 'परीक्षा' ४ टीका | १) |
| छन्दोमन्दाकिनी—( परीक्षोपयोगी ) १६ छन्दों का | =)॥ |
| हितोपदेश—( मित्रलाभ ) संस्कृतटीका परीक्षोपयोगी | १) |
| अष्टाध्यायीसूत्रपाठ—अत्युत्तम 'सरला' टीका सहित | २) |
| वेणीसंहारनाटक—( सचित्र ) संस्कृत तथा भा० टी० | २) |
| अमरकोश—'अभिनवराजलक्ष्मी' तीनों काण्ड (३२ पेजी) | १॥) |
| अमरकोश—प्रथमकांड ( १६ पेजी ) ॥) सटिप्पणी ३२ पेजी | ≡)॥ |
| अमरकोश—प्रथमकांड ३२ पेजी मूल =) द्वितीयकांड | ।=) |
| सोत्तरा तद्धितप्रयोगसूची—अत्युत्तम परीक्षोपयोगी | ॥) |
| अभिज्ञानशकुन्तला—'अभिनवराजलक्ष्मी' टीका तथा भाषा टीका | ६) |
| हितोपदेश—'अभिनवराजलक्ष्मी' एवं भाषाटीकासहित संपूर्ण | ३॥) |
| मध्यसिद्धान्तकौमुदी—अद्भुत सरला टी० २ रा सं० | ३) |
| किरातार्जुनीय—'अभिनवराजलक्ष्मी' टीका ( १–२–३ ) | २) |
| रघुवंशमहाकाव्य—'अभिनवराजलक्ष्मी' टीका ( १–२–३–४ ) | २॥) |
| ” ” ” ( २–३ ) | १) |
| ” ” २–३–४–५ सर्ग | २॥) |
| ” ” ५ वाँ सर्ग | ।।।=) |
| पञ्चतन्त्र—( प्र० परीक्षोप० ) अपरी० का० 'अभिनवराजलक्ष्मी' टी० | ॥।) |
| पञ्चतन्त्र—प्रथम तन्त्र ” | १) |
| मूलरामायण—नागेशभट्टी 'अभिनवराजलक्ष्मी' टीका | ॥) |
| विदुरनीति ( सचित्र ) ॥।) नीतिशतक ( सचित्र ) | १) |
| सारस्वतव्याकरणम्—( सरला टीका सहित ) | ॥≡) |
| लघुसिद्धान्तकौमुदी—सरलाटीका व भाषाटीका नया सं० | २) |
| शब्दरूपावलि—३२ पेजी ॥।) धातुरूपावलि— | ॥) |
| माघ ( शिशुपाल वध )— २।~)॥ रूपकौमुदी | ३) |
| वाल्मीकि सुन्दरकाण्ड गुटका—मूलमात्र सटिप्पणी | २) |
| रघुवंश १—५ सर्ग मल्लिनाथ ॥≡) पञ्चतन्त्र भा० टी० | ४) |
| नागानन्द ३) रामवनगमन १॥) विदुलोपाख्यान | ॥।) |
| अनुवाद कौमुदी प्रथम ॥।) अनुवाद कौमुदी दूसरा १॥) पाणिनीय शिक्षा | ॥=) |

पता—भार्गवपुस्तकालय, गायघाट, ( ब्रांच—कचौड़ीगली ), बनारस १.